# ASECANAKA RAMAYANAM

## (RAMAYANARYA)

BY
Brahmasri SUBRAHMANYA SURI
of Kadayakkudi.

PUBLISHED BY
S. SANKARANARAYANAN, B.A.,
(Son of the Author)
SUPDT. ACCOUNTANT GENERAL'S OFFICE,
MADRAS.

Price 8 As.] 1932 

# ASECANAKA RAMAYANAM

## (RAMAYANARYA)

BY

Brahmasri SUBRAHMANYA SURI

of Kadayakkudi.

PUBLISHED BY

S. SANKARANARAYANAN, B.A.,
(Son of the Author)
SUPDT. ACCOUNTANT GENERAL'S OFFICE,
MADRAS.

Price 8 As.] 1932 

# PREFACE

आसेचनकरामायणम् otherwise known as रामायणार्या is a short and sweet poem in Arya metrer. The peculiar feature of this work is that the first three pādas of each śloka narrate the story and the fourth pāda embodies the moral suggested by the incidents contained therein. The poem opens with the Nārada's interview with Vālmīki and not a single event has been omitted in the story.

The author of this work, the late Brahmasri Subrahmanya Suri, my revered father, was born in 1850 at Kadayakkudi, a village about 5 miles to the South of Pudukkotta. He was a Samavedi Brahmin of Kausika Gotra and a descendant of Cokkanatha Dikshita (father-in-law of Ramabhadra Dikshita, author of Janaki-parinayam) a distinguished Grammarian early in the Seventeenth Century.

The ancestors of the family are stated to have been in Nachikurichi a village now in a decayed state, adjoining Bommasamudram, Trichinopoly Taluq and thence migrated to Pinnangudy, a village in the state of Pudukkotta. The author's father Brahmasri Sankaranarayana Sastrial settled at Kadayakkudi where he married Srimati Subbalakshmi the only daughter of Brahmasri Ramaswami Sastrial.

The author received his education in काव्य, नाटक and अलंकार under Brahmasri Swami Iyengar of Kadayakkudi

and in व्याकरण under Brahmasri Srinivasa Seshacharya of Karavayal a village in Arantangi Taluq, Tanjore District. He secured a high degree of proficiency in Sanskrit Literature, Rhetoric and Grammar. In addition to his eminence as a Sanskrit Scholar, he was a fine musician and a finer poet and he had also an exquisite taste for drawing. As he was extremely pious and devoted, his skill in drawing was directed towards drawing pictures of various deities in different postures which were being hung in his pūjāgṛha. He was also well known for his Harikathā performances especially for his fine voice, erudite exposition and sincere devotion. For this purpose, he composed many charitrams in Sanskrit adapted to music though I regret to state that very few of the manuscripts are now with me. He was held in high esteem by the late Sir A. Seshia Sastrial, Dewan of Pudukkotta. He entered the Raja's College Pudukkotta as assistant Sanskrit pandit on 19-1-1884 and retired as Head Sanskrit pandit on 16-2-1910.

· His other works are. (1) वल्लीबाहुलेयम् a Sanskrit drama in seven acts recently published by me. (2) चतुष्पादीचतुश्शती —a literal translation in verse of நாலடியார் (3) मन्मथमादनम् a Bhana in one act published in a Journal some 30 years back. (4) Miscellaneous works such as (*a*) पूर्वाशुनिकवृत्तपञ्चाशिका, (*b*) वृत्तनामसंग्रहः, (*c*) कारकाणि and लार्थाः in verses, (*d*) charitrams adapted to music *viz.*, रामावतार, सीताकल्याणम्, रुक्मिणीकल्याणम्, पार्वतीकल्याणम्, मारसोमयाजिचरित्रम्, विभूति-माहात्म्यम् etc. (*e*) हल्लीसस्तुतयः such as रामचन्द्रपद्यपञ्चरत्नम् , शुकसूक्ति-

सुधारसायनम्, बृहदंबिकाविषयकहल्लीसाः, தங்கபாட்டு, हरतीर्थेश्वरस्तुतिदशकम्, रामायणहल्लीसाः, पार्वतीपरिणयहल्लीसाः डोलागीतानि and others.

[(*c*) in now in press.]

An important work बुद्धसन्देश and several other कृति's in praise of कपालेश्वर and पार्थसारथि composed by the author during his stay with me just before his demise in October, 1913, were unfortnately lost while travelling in train.

To avoid further loss of the very few works with me, the filial duty to the departed soul prompted me to publish the same as far as I can and I will be highly thankful if the lovers of Sanskrit Literature are kind enough to enlighten me on the errors which might have been committed by me while seeing the work through the press.

S. SANKARANARAYANAN,
*Superintendent*,
*Accountant General's Office*,
*Madras*.

Mylapore,
1—1—1932.

॥ श्रीः ॥

श्रीरामचन्द्रपरब्रह्मणे नमः

# ॥ आसेचनकरामायणम् ॥

---

## ॥ अथ बालकाण्डः ॥

यः पूर्वमाद्यां कवितोच्चशाखामारुह्य रामेत्यसकृच्चुकूज ।
रस्यं च रस्याक्षरमत्र वन्दे वाल्मीकिनामाद्भुतकोकिलं तम् ॥ १ ॥

नारदपयःपयोधेर्वाल्मीकी रामचरितमयममृतम् ।
यत्न विनैव लेभे साधुजनं साध्यमेव सफलयति ॥ २ ॥

क्रौञ्चमिथुनात्किलैकं वाल्मीकिः कामुकं किरातहृतम् ।
दृष्ट्वा शुशोच दयया भूतदया भूतिदायिनी पुंसाम् ॥ ३ ॥

व्याधकृतविहगवधजाच्छोकात्प्राचेतसस्य परमर्षेः ।
शोकः श्लोककरोऽभूत् सर्पादपि सन्मणिर्हि सम्भवति ॥ ४ ॥

श्लोकः शोकभवोऽयं रामायणमङ्गलार्थ इति धाता ।
वाल्मीकिमन्वगृह्णात् सम्पदि सम्पत्समेधते हि सताम् ॥ ५ ॥

वाल्मीकिवदनकमलात् सुस्राव च रामचरितमकरन्दः ।
नवनवरसदो नृणां सकलालिसुखाय सुमनसां भूतिः ॥ ६ ॥

यत्सौधचन्द्रशालाः स्वर्गं मत्वा भ्रमन्ति देवाश्च ।
सा लसति पूरयोध्या विदुषामपि जातु जायते मोहः ॥ ७ ॥
दशरथनामनि शक्रः साकेतपतौ सुरारिविजयधुराम् ।
निदधे चिराय युद्धे नौरपि शकटं कदाचिदारोहेत् ॥ ८ ॥
पङ्क्तिरथचक्रवर्ती वंशं संशयनिमग्नमभिवीक्ष्य ।
समखिद्यत्सह दारैः पुत्रेण हि गोत्रमुज्ज्वलं भवति ॥ ९ ॥
कैश्चित्कैश्चित्प्रोक्तं मखशतमाधिप्रशान्तये राजा ।
पङ्क्तिरथोऽसावतनुत रोगी शृणुयाद्भिषग्वचोऽप्यफलम् ॥ १० ॥
श्रुत्वा सुमन्त्रवचनादेष्यदुदन्तं सनत्कुमारोक्तम् ।
दशरथराजो मुमुदे तथ्यं पथ्यं प्रियं स्वदेत न किम् ॥ ११ ॥
श्रुतवैभण्डकचरितः शान्ताजानिं तमानयामास ।
दशरथराजः स्वपुरं स्वोद्यम एवाशु साधयेत्कार्यम् ॥ १२ ॥
निरवर्तयत्सरय्वां पुत्रीयामृश्यशृङ्गमुनिरिष्टिम् ।
पङ्क्तिरथाभ्युदयार्थो परकार्यपरा हि साधवो लोके ॥ १३ ॥
रावणवारणहतये जगदुपकृतये च भक्तसन्ततये ।
दाशरथितां हरिरगात् चतुरश्चतुरोऽपि साधयत्यर्थान् ॥ १४ ॥
विधितनयान्मुनित्रर्याद्विविधा विद्याः क्रमेण दाशरथिः ।
जग्राह सहावरजो गुरुकुलवासो गुणाय बालानाम् ॥ १५ ॥
रामं लक्ष्मणसहितं कौशिकमुनिरात्मयज्ञरक्षायै ।
दशरथमेत्य ययाचे कार्यपरा न गणयन्ति परखेदम् ॥ १६ ॥

अननुमतसूनुगमने पङक्तिरथे कौशिकस्तु हितबुद्धिः ।
हृदये कोपं निदधे निधिरपि निलयीभवेत्पिशाचस्य ॥ १७ ॥

परिसान्त्व्य कौशिकमुनिं निरबध्नाद्दशरथं कुलाचार्यः ।
प्रेषय तवात्मजाविति माता सन्ताड्य पाययेद्दुग्धम् ॥ १८ ॥

रामं लक्ष्मणमपि तौ कौशिक आदाय पथि महामंन्त्रौ ।
उभयो रक्षार्थमदात् परकीयार्थः श्रमेण रक्ष्यो हि ॥ १९ ॥

या ताटकेति विदिता सा गाधिसुतं क्षितीशसुतसहितम् ।
रुरुधे पथि प्रयान्तं श्रेयसि बहुलीभवन्ति विघ्नाश्च ॥ २० ॥

विद्राव्यते सवित्रा रात्रिसखीतीर्ष्ययेव रात्रिचरी ।
दुद्राव सूरवंश्यं रोषो दुष्टस्य वैरिवंश्येऽपि ॥ २१ ॥

साशङ्करामनुन्नो बाणः प्राणान् समाददे तस्याः ।
सहसैव ताटकाया गौरपि वध्या हि यात्मनो हन्त्री ॥ २२ ॥

सिद्धाश्रमेऽभिरामे रात्रिचरौघेषु रामनिहतेषु ।
अयजत विश्वामित्रः शमिते हि विषे पयोऽम्बुधावमृतम् ॥ २३ ॥

बालोऽपि रामभद्रो रौद्रान् रात्रिञ्चरान्निहत्यासौ ।
धैर्येणाभूद्विजयी स्फुलिङ्गमपि निर्दहेत्पलालचयम् ॥ २४ ॥

शरनुन्नो मारीचो रामबलस्येव सागरस्यापि ।
गाम्भीर्यदर्श्यखिद्यत् स्वपरबलेक्षा पुरैव खलु कार्या ॥ २५ ॥

वैकुण्ठेऽपि विवाहो रघुवीरः कौशिकानुगत्यां च ।
नाखिद्यन्मार्गेऽसौ अभ्यासः खेदमावहेत्कस्य ॥ २६ ॥

अध्वररक्षादक्षं जनकाध्वरमूर्तया श्रिया रामम् ।
कौशिक ऐच्छद्योक्तुं रक्षितवंशाद्धयुपायनं ग्राह्यम् ॥ २७ ॥

रामस्य पादरजसा दृषदप्यासीन्महामुनेर्योषित् ।
किमतोऽस्ति जगति चित्रं महतां महिमा सुदुर्ग्रहो नितराम् ॥ २८ ॥

जनकप्रतिश्रुतो यः शिवधनुरारोपणं सुताशुल्कः ।
रामो ह्यसाधयत्तं दर्शयितव्यं बलं हि परिणेत्रा ॥ २९ ॥

जनकः स्वसुते ललिते रामाय च लक्ष्मणाय च क्रमशः ।
हृदये मुदितः प्रादात् कन्यारूपोऽर्थ एष परकीयः ॥ ३० ॥

जनकोऽनुजं कुशध्वजमदापयत्तत्सुते च भरताय ।
शत्रुघ्नाय च बलिने चिन्त्यं ज्येष्ठैः कनिष्ठकुशलमपि ॥ ३१ ॥

सवधूकैर्निजपुत्रैः पङ्क्तिरथं मैथिलोऽन्वगाद्यान्तम् ।
मुक्त्वा तिस्रो रात्रीः बन्धूनां दुस्सहो हि विरहः स्यात् ॥ ३२ ॥

भार्गवरामो रामं रुरुधे शिवचापभङ्गकोपेन ।
नापश्यत्पङ्क्तिरथं क्रुद्धा वृद्धिं परस्य न सहन्ते ॥ ३३ ॥

स्वधनुषि रामकरात्ते निहितेन शरेण भक्षिततपस्कः ।
भृगुनन्दनो ह्यशाम्यत् वृष्ट्या शाम्येद्धि सुचिरतापोऽपि ॥ ३४ ॥

साध्वीभिर्महिषीभिः साधितगार्हस्थ्यसमुचिताचाराः ।
व्यलसन् राजकुमारा मणयो विलसन्ति कनकमालाभिः ॥ ३५ ॥

॥ इति बालकाण्डः ॥

## ॥ अथ अयोध्याकाण्डः ॥

मातुलकुलमाहूतो जातु सशत्रुघ्न एव भरतोऽगात् ।
कौतुकतः साकेताद् वस्तु हि समये विधिर्वियोजयति ॥ १ ॥

स्वधुरां त्रिभुवनधुर्ये रामे विनिवेश्य विश्रमं प्राप्तुम् ।
वृद्धो दशरथ ऐच्छत् धुर्यसुखाय हि धुरन्धरग्रावा ॥ २ ॥

वृद्धाद्दशरथभूपाद्राज्यश्री रामचन्द्रमुपयातुम् ।
अचकमत वीरवर्यं नवमनवात् कमलमेव याति श्रीः ॥ ३ ॥

लोकोऽपि रामभद्रं नाथं चकमे दयानिधिं स्वस्य ।
दशरथराजतनूजं दुग्धाब्धेश्चन्द्रमिच्छति चकोरः ॥ ४ ॥

रामाभिषेकमादौ श्रुत्वा हृष्टापि केकयी प्राप ।
कुब्जाहृतातिरोषं वह्नेः सङ्गेन तोयमुष्णं स्यात् ॥ ५ ॥

पुत्रस्य भूमिलाभं रामविवासं च केकयेन्द्रसुता ।
दशरथनृपं ययाचे स्त्री कुपिता वेत्त्यकार्यमपि कार्यम् ॥ ६ ॥

लक्ष्मण एवाकुप्यत् रामस्य विवासनेन ताताय ।
न चुकोप रामभद्रो ज्येष्ठः शृङ्गोऽनुजो भवेच्छृङ्गी ॥ ७ ॥

सूतसुमन्त्राधिष्ठितमात्तहयं स्यन्दनं समारोहत् ।
ताताज्ञया स रामो जातानां तातशासनं शिरसि ॥ ८ ॥

भूमिं पितरौ बन्धून् वनवासदृढव्रतो विसृज्यैव ।
रामो वनं प्रतस्थे स्थिरचित्तं शिथिलयेन्न किंचिदपि ॥ ९ ॥

सीता स्वमनुससार प्रीता कान्तं वनं प्रयान्तं तम् ।
पत्न्यैवानुमता सा सूचिः कान्तानुसारिणी भवति ॥ १० ॥

वनवासतो भिया वाऽनूढतया वाऽन्वगान्न रामं तम् ।
साशापि राज्यलक्ष्मीः वरोत्सुका परवती सुदत्येवम् ॥ ११ ॥

सौमित्रिर्निजमात्रा प्रहितोऽनुययौ समुत्सुको रामम् ।
सादरमुपचारपरो भ्राता ह्यपरो बहिश्चरः प्राणः ॥ १२ ॥

अन्वीय जना रामं निशि सुप्ता न ददृशुः प्रगे ते तम् ।
ददृशुश्च तन्निवासं वत्सा सुप्तस्य वत्स एव स्यात् ॥ १३ ॥

नगरे स शृङ्गिबेरे रामो गुहमिष्टमित्रमद्राक्षीत् ।
पुरतः स्थितं विनीतं स्निग्धानां पथि समागमः सुखदः ॥ १४ ॥

अनभिमतनगरवासं रामं सानुजमलञ्चकार गुहः ।
तत्प्रार्थितो जटाभिः विपदि हि मित्रस्य मित्रमुपकुर्यात् ॥ १५ ॥

गङ्गां तुङ्गतरङ्गामङ्गान्तरबाह्यपङ्कभङ्गपराम् ।
ऐक्षत रामोऽब्धिसतीं पयस्विनीदर्शनं शुभोदर्कम् ॥ १६ ॥

भगवति भागीरथि मे सौभाग्यं देहि सौमनस्यं च ।
सीता प्रार्थयदेवं कष्टानि स्वेष्टदेवतापनुदेत् ॥ १७ ॥

चिरकालचिन्त्यमानं रामं स्वाभ्याशगं भरद्वाजः ।
बन्धापह्नमद्राक्षीत् सुलभं स्यात् भाग्यतो विचेयमपि ॥ १८ ॥

प्रणनाम भरद्वाजं दाशरथिस्तस्य चाशिषं लेभे ।
हर्षान्वितान्तरङ्गो विप्राणामाशिषो न मोघाः स्युः ॥ १९ ॥

भ्रात्रा स चित्रकूटे कुत्रचिदत्रासया च भूसुतया ।
रेमे पुरवद्रामो रामो यत्रास्ति सा किलायोध्या ॥ २० ॥

पर्यायसुप्तमङ्के भार्याया राममगणयन् दुष्टः ।
काकः कश्चिदुपागात् कष्टेऽनिष्टानि संप्रजायन्ते ॥ २१ ॥

अदरः स रामदारान् विददार भुजान्तरे मदेनैव ।
नाबोधयत् पतिं सा सत्या पत्युः सुखं हि कर्तव्यम् ॥ २२ ॥

यः कृतवानपराधं द्विसहस्रदगङ्कशायिजायायाम् ।
स सहस्रनयनतनूजो बीजान्तरतोऽभ्युदेति किमलाबूः ॥ २३ ॥

सुखकलितललितनिद्रं रामं रामास्तनद्रुतं रुधिरम् ।
प्राबोधयद्विशीर्णं तनुजाः सहजापदं हि न सहेरन् ॥ २४ ॥

सीतां भीतां दृष्ट्वा रामः श्रुतवृत्त आशु तत्काले ।
प्रयुयोजास्त्रदर्भं वायसयोग्योऽयमेव रामशरः ॥ २५ ॥

ब्रह्मास्त्रतया क्षिप्तो रामेण स दर्भ एव काकाग्रे ।
कालानलो यथाज्वलत् आयुधतामेति तृणमहो बलिनः ॥ २६ ॥

काकोऽस्त्रवेगनुन्नः पित्रा मात्रा सुरैर्महर्षिवरैः ।
पक्षिकुलैः परिमुमुचे रामाज्ञां नामरोऽपि लङ्घयति ॥ २७ ॥

काकः शरणान्वेषी लोकत्रयसंपरिक्रमेणार्तः ।
ऐद्राममेव शरणं भ्रामंभ्रामं प्रगे तु घट्टकुटी ॥ २८ ॥

काकं स दयाजलधिर्व्याकुलमालोक्य पालयामास ।
तद्दक्षिणाक्षि हत्वा दुष्टा ये शिक्षयैव रक्ष्यास्ते ॥ २९ ॥

काकः तदा क्षमायां पतितं गतिहीनमवनिजारामौ ।
दृष्ट्वा प्रसेदतुरलं तस्या माता च तस्य चरणौ भूः ॥ ३० ॥

श्रीरामचन्द्रमुक्तां तमसेव वृतां महाशुचायोध्याम् ।
दीनोऽविशत्सुमन्त्रो ज्यौत्स्नीवित्तामसी भवेत् किं वा ॥ ३१ ॥

श्रुतरामादिचरित्रः कौसल्यासन्निधौ दशरथोऽसौ ।
अनुतापयुतोऽखिद्यत् यातेऽम्बुनि सेतुचिन्तया किं वा ॥ ३२ ॥

न शुशोच केकयी सा रामं निर्वास्य सानुजं दारैः ।
स्वाधीनभर्तृकैवं साहसमबलास्वहो महाभयदम् ॥ ३३ ॥

प्राज्ञोऽपि दशरथोऽसौ प्रस्थाप्य सुतं सदारमनुजयुतम् ।
तप्तो ममार विलपन् विपरीता स्याद्विनाशसमये धीः ॥ ३४ ॥

भरतं मातुलकुलतः सहसानाययदसौ वसिष्ठर्षिः ।
करणीयवित्पुरोधाः पुत्राधीनो हि भवति पितृमेधः ॥ ३५ ॥

स शुनीमिव धावन्तीं पशुताडमताडयद्रुषा कुब्जाम् ।
अशुभकरीं शत्रुघ्नः पिशुनान् वशिनः कदापि न सहेरन् ॥ ३६ ॥

सचिवा वसिष्ठमुख्या रचितमनोनिश्चयास्तदा भरतम् ।
सुचिरं रक्षेत्यवदन् उचितं राज्ञा विना न हि स्थातुम् ॥ ३७ ॥

अचकमत नैव भरतो राज्यश्रियमार्यरामपरिणेयाम् ।
प्राप्तामपि निजमात्रा परिवादः परिभवाय परिवेत्तुः ॥ ३८ ॥

तप्तां तनयविवासात् शपथशतै राममातरं भरतः ।
त्रपयासान्त्वयदमलः कपटविहीनः कुलस्य भूषा स्यात् ॥ ३९ ॥

भरतः समाप्य विधिवत् पितृमेधं सानुजोऽग्रजान्वेषी ।
प्रणनाम भरद्वाजं महदाश्रयणं हि मङ्गलाय स्यात् ॥ ४० ॥

योगपुरि भरतजनतां समतर्पयदद्भुतं भरद्वाजः ।
दशरथमार्गणनिरतां योगिषु महिमास्ति युक्तिदुर्ज्ञेयः ॥ ४१ ॥

भरतस्य भरद्वाजो हृदयं प्रश्नैः प्रकाश्य स प्राज्ञः ।
रामगिरिमार्गमवदत् शैलीयं ब्रह्मतत्त्ववेतॄणाम् ॥ ४२ ॥

रामविवासप्रगुणं पितृशोकं दुर्वहं विभक्तुमिव ।
रामं जगाम भरतः स्वजनविभक्ता प्रयाति शुक् प्रशमम् ॥ ४३ ॥

मन्दाकिन्युदकैः सह पिण्याकैर्बादरैरिङ्गुदैः पिण्डम् ।
प्रादात्पित्रे रामो यानि पुमांस्तान्यदन्ति तद्देवाः ॥ ४४ ॥

भरतार्थितोऽपि रामः पितृतृप्त्यै नाभ्युपैन्निजागमनम् ।
भरतं न्यवर्तयत तं पुत्राणां पितृशासनं न वर्ज्यं स्यात् ॥ ४५ ॥

पञ्चदशाब्दस्यादौ न पुरि भवान् यदि विशेयमनलमहम् ।
इति भरतः प्रतिजज्ञे स्यान्मृतिर्धीरस्य जानुदघ्नोऽब्धिः ॥ ४६ ॥

भक्तिगुणवेष्टितोद्यमगिरिमथिताद्रामचन्द्रकरुणाब्धेः ।
भरतोऽगान्मणिपादू दृष्टिर्हि मणेरभीष्टदा पश्चात् ॥ ४७ ॥

मणिपादुके रघुपतेर्मुनिवेषः स्वशिरसा वहन् भरतः ।
नन्दिग्रामे न्यवसत् स्वजनवियोगे स्वदेत न हि भुवनम् ॥ ४८ ॥

राज्यं रामोपानत् प्राज्यं प्राप्यारुरोह रमणीयम् ।
मनुवंशभद्रपीठं प्रतिनिधितामेति पार्थिवप्रेयान् ॥ ४९ ॥

कृत्यं स्वकृतं भरतो नित्यं विनिवेद्य रामपादूभ्याम् ।
प्रत्यैक्षताग्रजागमम् अत्यन्तमलोलुपा हि वशिनः स्युः ॥ ५० ॥

रामस्य हेमपादूर्भक्तैर्हृदि मूर्ध्नि भरतवद्विधृता ।
गमयति तान् वैकुण्ठं महदाश्रयिणां जयत्यहो महिमा ॥ ५१ ॥

क्षेममदान्मुनिपत्न्यै रामाङ्घ्रिश्चिरवयांसि काकाय ।
भरताय पादुकां स्वां भगवच्चरणाश्रयो न विफलः स्यात् ॥ ५१ ॥

यमिनां कुलपतिसविधे भ्रूसंज्ञां साधुरक्षणापेक्षाम् ।
दृष्ट्वालज्जत रामो मानिमनो मानहानितो बिभियात् ॥ ५३ ॥

श्रुत्वा कुलपतिवचनं रक्षोवधसूचनार्थमिति रामः ।
मौनिभ्योऽदादभयं रघुकुलमनुकूलमभयकामानाम् ॥ ५४ ॥

॥ इत्ययोध्याकाण्डः ॥

———

## ॥ अथ आरण्यकाण्डः ॥

सुमहद्विवेश स वनं सवनकृदवनाय सीतया रामः ।
आराममिव स्वपुरो वपुरोजस्वी निजं न लालयति ॥ १ ॥
रामं रामासहित स हितपरो लक्ष्मणोऽन्वगात् सुमतिः ।
सुमतीर्थाद्यं वितरन् पितरं मेने हि मातृवचसा तम् ॥ २ ॥
तत्र विराधस्त्वध्वनि सध्वनि सीतां मदेन स जहार ।
हा रामेति वदन्तीं दन्ती स्वान्तिकलतां हि परिकर्षेत् ॥ ३ ॥
रामशरविप्रलब्धो लब्धोर्वीजां विहाय तौ यातु ।
यातुं प्रगृह्य चकमे कमनीयं वेत्ति नैव कपिरर्थम् ॥ ४ ॥
तं नृपसुतौ वहन्तं हन्त महीजा त्वसान्त्वयन्नय माम् ।
यमतो भ्रंशय ताविति विदितकुलानामयं गुणः स्त्रीणाम् ॥ ५ ॥
हत्वा विराधमवटे तद्वचसा राघवौ तदाक्षिपताम् ।
सीताभीतिनिवृत्त्यै जेतारो नोपयान्ति कातर्यम् ॥ ६ ॥
अथ पुरुहूताहूतं हुतमनलं राघवो विविक्षन्तम् ।
सन्तमगाच्छरभङ्गं पङ्कानि हरन्ति संगताः सन्तः ॥ ७ ॥
शरभङ्गमेत्य रामः शरभङ्गस्तब्धकामवद्वपुषा ।
ग्रामविबुधैरलोक्यत यतमनसामपि यतो रुचिस्तत्सत् ॥ ८ ॥
रामोऽगमत् सुतीक्ष्णं तीक्ष्णतपस्कं स तापसोत्तंसम् ।
तं सन्ननाम वन्द्यं वन्ध्यं न स्याद्धि शान्तजनभजनम् ॥ ९ ॥
घटजं रामोऽद्राक्षीत् द्राक्क्षीणं स्याद्यदीक्षया पापम् ।
आप तदाश्रमवासं वासर आभाति यत्र सत्सङ्गः ॥ १० ॥

यान् देशानागस्त्यानागस्त्यङ्नेक्षते रुजा सततम् ।
स तु तान् रामोऽभजत व्रजतां भिषगास्पदं सुखं हि स्यात् ॥ ११ ॥

अक्षोभ्यै रक्षोभिः कुक्षौ वक्षसि विदारिता मुनयः ।
ऐक्ष्यन्त राघवाभ्यां क्रोष्टुः कुतुकं व्यथा हि कटकानाम् ॥ १२ ॥

सदनुग्रहाभिलाषी सदनेषु चचार मौनिनामसकृत् ।
अब्दान् सुबहून् रामो निधिनिलये बंभ्रमीति किल लोकः ॥ १३ ॥

वृद्धस्य पितुः सख्युर्गृध्राधिपतेर्जटायुषो वचसा ।
अध्यवसद्रामो वनम् आध्यपहं भवति वृद्धसाहाय्यम् ॥ १४ ॥

पञ्चशरमोहनाङ्गः पञ्चवटीमेकदागमद्रामः ।
अनुजेन जायया सह न हि सुखमेकत्र विप्रवासे स्यात् ॥ १५ ॥

शूर्पणखेति कदाचिद्रावणसोदर्युपेत्य रघुतिलकौ ।
व्यामोहयितुं ह्ययतत कामिजना नान्यभावमीक्षन्ते ॥ १६ ॥

एषार्गळाधुनैनां योषां हन्मीति राक्षसी कोपात् ।
सीतां निहन्तुमैच्छत् योषा योषान्तरं हि न सहेत ॥ १७ ॥

अक्षतकामामेनां शिक्षयितुं लक्ष्मणो मनो विदधे ।
राक्षस्यपि साभैषीत् रूक्षः कामो हि शिक्षया शाम्येत् ॥ १८ ॥

शूर्पणखासंज्ञाया नासामसिना निकृत्य सौमित्रिः ।
आकारविकृतिमकरोत् स्त्रीणां वैरूप्यमेव वधतुल्यम् ॥ १९ ॥

तां प्रथमहसितवदनां पश्चाद्वैरूप्यतो विषीदन्तीम् ।
दृष्ट्वा बिभाय सीता हसितं रुदितं भयाय पैशाचम् ॥ २० ॥

विप्रतया विधवा सा चुक्रोश खराग्रतो जनस्थाने ।
पतिता च गर्दभीवत् आश्वास्या भ्रातृभिर्हि विश्वस्ताः ॥ २१ ॥

लक्ष्मणकृतापराधं तत्क्षणमेव व्यजिज्ञपत्तस्मै ।
शूर्पणखा स्वभ्रात्रे स्वं दोषं केऽपि नैव जानन्ति ॥ २२ ॥

भगिनीभणितं श्रुत्वा भगवन्तौ राघवौ स दुद्राव ।
कोपात् खरः ससैन्यः कृत्यमकृत्यं न वेत्ति भृशमूढः ॥ २३ ॥

खरदूषणत्रिशिरसः परिवारयुतान् व्यनाशयद्रामः ।
शूर्पणखेह निदानं स्त्रीधीः कल्पान्तकालतामेति ॥ २४ ॥

शूर्पणखा रामशरैश्चर्चितमालोक्य तज्जनस्थानम् ।
रावणमेत्यारोदीत् पतति कुलं सततरोदनं यत्र ॥ २५ ॥

स्वस्रा प्रलोभितोऽसौ स्वयमेव जिहीर्षति स्म भूतनयाम् ।
भूतनयां पौलस्त्यः पश्चादापत् पुरैव मतिनाशः ॥ २६ ॥

यातूनां राजासौ जात्ववदच्छान्तमेत्य मारीचम् ।
रामं हरतु भवानिति मन्दीभवति हि मतिः स्वकार्येषु ॥ २७ ॥

वृक्षे वृक्षे राजन् वीक्षे चीराजिनाम्बरं रामम् ।
इत्यवदन्मारीचो मुग्धबिडालो महानसाद्बिभियात् ॥ २८ ॥

रावणतो वधलाभात् रामाद्वधलाभमुत्तमं मत्वा ।
राममगान्मारीचः कुट्टनमपि साङ्गुलीयकरलभ्यम् ॥ २९ ॥

रावणनिर्बन्धवशात् सौवर्णमृगत्वमेत्य मारीचः ।
व्यामोहयदपि सीतां मानिन्यो मायया विमुह्येयुः ॥ ३० ॥

न मृगोऽयि यातु सीते विमृश धियैवं क वास्ति हेमैणः ।
इति पतिगिरमियममुचत् छिद्रेष्वायान्ति बहुतरानर्थाः ॥ ३१ ॥

गृह्णासि यदि मृगं तं रत्नचितं प्राणधारणं कुर्वे ।
इत्यवदत् सा रामं साध्यमसाध्यं न वेत्ति साशा स्त्री ॥ ३२ ॥

दुद्रावाद्भुतमेणं स द्राक् सीतां तितर्पयिषुरार्यः ।
रामोऽपि विपिनमध्ये धीमानपि रामया जडीक्रियते ॥ ३३ ॥

दृश्यादृश्यो धावन् पश्यन् पश्चात् स मायिमारीचः ।
घनवनमनयद्रामं तृणपिहितः पातयेन्न कं कूपः ॥ ३४ ॥

कार्तस्वरमृगरूपः कार्तान्तपुरीमनायि मारीचः ।
रामस्य बाणभिन्नोऽप्यन्धो रत्नाकरे पतन् म्रियते ॥ ३५ ॥

नाथार्तस्वरशङ्कां सीतायाः स्वस्वरेण मारीचः ।
जनयन् पपात निहतः स्वविपद्यपि विप्रियं रिपुः कुर्यात् ॥ ३६ ॥

मारीचक्लृप्तशब्दं नारी रामस्य पतिरवं मत्वा ।
प्रेरितवती तदनुजं विपदं योषा हि वेत्ति नैष्यन्तीम् ॥ ३७ ॥

अग्रजशासनकारी जाग्रत् सीताऽवने स सौमित्रिः ।
सेहेऽस्या न दुरुक्तान्याजानेयः कशां हि न सहेत ॥ ३८ ॥

सीतानिर्बन्धवशादेतं सौमित्रिमागतं रामः ।
परिसान्त्व्य धैर्यममुचत् मानी ह्यनुभवति मानसं दुःखम् ॥ ३९ ॥

पतिरेत्य राक्षसानां प्रतिपालयति स्म राघववियोगम् ।
रामाश्रमे ससीते रामाचोरो हि रन्ध्रदर्शी स्यात् ॥ ४० ॥

अवलम्ब्य भिक्षुवेषं सविधे गत्वैव रावणः सीताम् ।
भिक्षामयाचत खलो लक्ष्मीसविधेऽपि दुर्नयो भिक्षुः ॥ ४१ ॥

रावणसन्न्यासिनमपि सावनिजाह्युपचचार भक्त्यैव
तत्त्वानभिज्ञहृदया यतयः पूज्याः सदण्डकाषायाः ॥ ४२ ॥

स तु रावणसन्न्यासी क्षितिजापूजां हृदा न बहुमेने ।
वव्रेऽथ भोगभिक्षां धीराणि मनांसि दारचोराणाम् ॥ ४३ ॥

वेषेण पूज्यमपि तं रोषेण भुवः सुताथ पौलस्त्यम् ।
चोरं विनिन्दितवती गुरवोऽप्युत्पथगता विनिन्द्येरन् ॥ ४४ ॥

दाशरथिधर्मदारानादाय दशाननं प्रधावन्तम् ।
रुरुधे झटिति जटायुः मित्रधनं शत्रुतो हि संरक्ष्यम् ॥ ४५ ॥

रावणनीता सीता हा हा हे नाथ रामरामेति ।
विललाप सभयमुच्चैः अबलानां स्वपतिरेव बलमखिलम् ॥ ४६ ॥

साध्वी सा नाधाक्षीत् पातिव्रत्याग्निनैव पौलस्त्यम् ।
सीता पतिं स्मरन्ती स्वातन्त्र्यं योषितो हि नार्हन्ति ॥ ४७ ॥

रुन्धन्तं गृध्रेन्द्रं भिन्दन् खड्गेन तीक्ष्णधारेण ।
प्रजहार रावणोऽसौ प्रतिकूलान् पारदारिका घ्नन्ति ॥ ४८ ॥

गृध्रं कण्ठगतासुं कृत्वा विरथोऽन्यमेव रथमेत्य ।
गतवान् पौलस्त्योऽसौ घातुकता नाम यातुधर्मो हि ॥ ४९ ॥

कौशेयखण्डबद्धं कान्तं भूषौघमृश्यमूकगिरौ ।
कपिपञ्चके न्यपातयत् अवितथतामेति धीमतां बुद्धिः ॥ ५० ॥

बहुशापपाशबद्धो बहुमुख आर्यमशोकवनिकायाम् ।
सीतामवासयदमूं पुरुषोऽन्यद्दैवमन्यदाचरति ॥ ५१ ॥

प्रत्ययकृते प्रियायाः सौवर्णमृगाजिनं समादाय ।
रामः स्वोटजमगमत् कामं पत्न्या अपूरयन्नधमः ॥ ५२ ॥

शून्यां पर्णकुटीं स्वामन्यामिव वीक्ष्य रामभद्रोऽसौ ।
देहं स्वं व्यस्मार्षीत् गृहिणी गृहमुच्यते हि न तु भवनम् ॥ ५३ ॥

या सर्वकालबन्धुः सा सीता काननेऽद्य कुत्र गता ।
इति किल रामो व्यलपत् प्रथमं माताथ पोषणे दाराः ॥ ५४ ॥

नष्टा जनकसुता सा दृष्टा किमु वृक्ष पुष्पहरणपरा ।
रामोऽप्राक्षीदेवं कामार्ताः प्रकृतिकृपणतां यान्ति ॥ ५५ ॥

केकिन् मूकीभव मा स्तोकं ब्रूहि क्व मे प्रियेत्यवदत् ।
रामः स्मरंस्तदळकान् कामी स्यात् साम्यदर्शनोन्मत्तः ॥ ५६ ॥

चन्द्रश्चन्दनशिशिरः सन्तापयति प्रियावियोगे माम् ।
इति रामोऽनुजमवदत् विषतामेतीश्वरेच्छयाप्यमृतम् ॥ ५७ ॥

तच्छ्वसितगन्धविजितो मलयानिल एष मारयेदिव माम् ।
सीताविरहे लक्ष्मण शत्रुजितः शात्रवान् हि बाधेत ॥ ५८ ॥

दैन्येन तत्र रामो ह्रियमेत्य महीसुतावियोगेच ।
चिरमात्मबलमनिन्दत् परहृतदारस्य पौरुषं विफलम् ॥ ५९ ॥

आश्रमतो रघुवीरावश्रान्तमितस्ततो विचिन्वानौ ।
ऐक्षेतां गृध्रेन्द्रं भाग्यमुपायं प्रदर्शयेत् पुंसाम् ॥ ६० ॥

पौलस्त्यहृतां सीतां त्वं लप्स्यस इति जटायुरुक्त्वैव ।
अजिगमिषत् परलोकं स्वजनो म्रियते मनोगतं ह्युक्त्वा ॥ ६१ ॥

रामं जटायुरन्ते रामां प्राप्स्यासि तथा मुहूर्तोऽयम् ।
विन्दाख्य इत्यवोचत् वाचोपकृतिश्च वाञ्छितं यच्छेत् ॥ ६१ ॥

पितृवन्मृतं जटायुषमदहदतर्पयदहो स रामोऽपि ।
सौमित्रिणा कृतज्ञो यः को वा पितृसखो हि पितृतुल्यः ॥ ६३ ॥

या गतिरुत्तमलभ्या तां गतिमगमत्तदा स गृध्रेन्द्रः ।
रामस्य सान्निधाने किमलभ्यं श्रीपतौ प्रसन्नेऽपि ॥ ६४ ॥

अथ पथि कबन्धमसुरं व्यथयन्तं कर्षणेन रघुवीरौ ।
असिभिन्नभुजमकुरुतां गजतः सिंहौ कथं नु बिभियाताम् ॥ ६५ ॥

कारितनिजतनुदाहः प्रेरितवांस्तपनतनयसख्याय ।
रामं स दनुकबन्धो भाव्यस्य द्वारमस्ति सर्वत्र ॥ ६६ ॥

सिद्धा काचन शबरी वृद्धा कबरीं जटामयीं दधती ।
सुफलै राममतार्प्सीत् लभते भक्तोत्तमार्पितं भगवान् ॥ ६७ ॥

मुनिभिः पुरोपदिष्टा प्रणिपत्य रघूद्वहं दिवं शबरी ।
तनुदाहपूर्वकमगात् अनवधिकं श्रीशसेविनां श्रेयः ॥ ६८ ॥

॥ इत्यारण्यकाण्डः ॥

---

## ॥ अथ किष्किन्धाकाण्डः ॥

अग्रजविपद्विशङ्की सुग्रीवो दुन्दुभेः पिधाय बिलम् ।
क्षिप्रमगात् किष्किन्धां स्वप्राणाः सुप्रिया हि सर्वेषाम् ॥ १ ॥

निर्जितदुन्दुभिदेहं निर्गम्य बिलात्ततोऽक्षिपद्वाली ।
स मतङ्गाश्रममगमत् दुर्दैवं दुर्दशां स्वयं यच्छत् ॥ २ ॥

अजिघांसत् सुग्रीवं वृजिनं कृतवन्तमेव सञ्चिन्त्य ।
बाल्यनुनीतोऽपि रुषा बालिशजनता न हि त्यजेत् प्रकृतिम् ॥ ३ ॥

प्रकुपितमतङ्गशापादकुतोभयमृश्यमूकमध्यवसत् ।
सुग्रीवः सह सचिवैः नैकाकी स्याद्धि कोऽपि भयकाले ॥ ४ ॥

दुन्दुभिदानवजेतुः स्वभ्रातुर्वालिनो भिया कपिराट् ।
अगमदगमृश्यमूकं प्राणा यदि लवणविक्रयाज्जीवेत् ॥ ५ ॥

स चतुर्भिः सह सचिवै रघुवीरावृश्यमूकशिखरिस्थः ।
दृष्ट्वाबिभेत् कपिवरः कळङ्किनां स्यात् पदेपदे भीतिः ॥ ६ ॥

वालिप्रहितावेताविति रामं लक्ष्मणं च सुग्रीवः ।
दूराद्वीक्ष्य शशङ्के भीतानां भाति रज्जुरपि सर्पः ॥ ७ ॥

समुपेत्य भिक्षुवेषं समया रामं सलक्ष्मणं हनुमान् ।
राज्ञानुमतो गतवान् प्राज्ञो जिज्ञासुना हि संप्रेष्यः ॥ ८ ॥

सौष्ठवतः शब्दानां कष्टं विस्मार्य नन्दयन् हनुमान् ।
तौ दाशरथी जज्ञे गन्धं जानाति हि स्वयं घ्राणः ॥ ९ ॥

वह्निं विधाय साक्ष्ये सुग्रीवेणार्कजेन कपिपतिना ।
सख्यं रामो लेभे दुष्यति दुग्धं न भाण्डवैरूप्यात् ॥ १० ॥

विनिवेद्य वालिचरितं स्वनिकृतिमपि तत्कृतां स सुग्रीवः ।
रामाय मुदमविन्दत दुःखं सख्ये निवेदितं सुखयेत् ॥ ११ ॥

वानरसेना लब्धा काननवासे रघुप्रवीरेण ।
भार्याचोरवधार्थं तिर्यञ्चोऽप्युपकृतो हि नीतिमताम् ॥ १२ ॥

विजयं सख्ये रामो विचयं कपिनायकोऽपि सीतायाः ।
प्रतिजज्ञातेऽन्योन्यं कृतमपि वा प्रतिकृतं सदाचारः ॥ १३ ॥

कपिराजदर्शितमसौ कपिशं रामः प्रियाभरणजातम् ।
पीत्वा दृशा व्यषीदत् विरहोऽसह्यो हि लक्ष्मवीक्षायाम् ॥ १४ ॥

मित्रप्रत्ययहेतोः सालान् सप्त च शरेण स विभेद ।
अद्रिं भूमिं च समं भद्रार्थी मित्रवचनकारी स्यात् ॥ १५ ॥

वालिनमतुलशिलीमुखगोचरमकरोत् स धार्मिको रामः ।
सुग्रीवरक्षणार्थं शत्रुः स्वस्यापि मित्रशत्रुर्यः ॥ १६ ॥

कथमिव निरागसं मां विदधासि परासुमेव दाशरथे ।
इति वाल्यवदद्रामं यदि हेतुः सङ्कटानि सह्येरन् ॥ १७ ॥

भ्रातृद्रोहिणमहनं भरतमहाराजपूरुषोऽहं त्वाम् ।
रामोऽवददिति वालिनम् आमरणं नीतिरेव नीतिमताम् ॥ १८ ॥

गूढवधनैपुणीं तव मूढा जानामि साधु दाशरथे ।
इति परिजहास तारा धर्म्यं निन्दन्ति तत्त्वमविदन्तः ॥ १९ ॥

उचितं निलीय हननं रचितं मृगविषयकं हि चापभृताम् ।
रामोऽवददिति तारां मृगया न विगर्ह्यते हि मृगयूनाम् ॥ २० ॥

कपिराजं सुग्रीवं युवराजं चाङ्गदं समास्थाप्य ।
रामो निर्वृतिमगमत् संश्रुतनिर्वर्तनं सतां भारः ॥ २१ ॥

शरदि विचेया सीतेत्यभिधाय क्लिष्टपूर्वबुद्धिरसौ ।
भोगे ममज्ज कपिराट् न हि गेहं मुच्यते निदाघार्तैः ॥ २२ ॥

तारारुमासमेतो माराभिहतो गृहे सदारमत ।
विस्मृत्य रामकार्यं स्मरनिहता विस्मरन्ति हि स्वमपि ॥ २३ ॥

रामो विलम्बकुपितः सौमित्रिं प्राहिणोत् प्रबोधयितुम् ।
कामवशं सुग्रीवं शमयेत् स्वयमात्मगामिनीं कण्डूम् ॥ २४ ॥

ज्वलननिभः सौमित्रिर्बिलमेत्यातर्जयत् प्लवङ्गेशम् ।
चलमङ्गीकृतसाध्यं फलवृक्षः प्रस्तरेण ताड्येत ॥ २५ ॥

आर्यः परहृतदारस्तिष्ठति कपिराज किमिति निद्रासि ।
संश्रुतनिर्वहणे को नौभृतिदैर्गृह्यते न गोपुच्छः ॥ २६ ॥

तारा सा सौमित्रिं धीरा तमसान्त्वयत् पुरो गत्वा ।
युक्तिसमेतैर्वचनैः शूरः स्त्रीसान्त्वतः शमं यायात् ॥ २७ ॥

भीतः प्लवगेन्द्रोऽसौ चेतः सीताविमार्गणोद्युक्तम् ।
व्यतनोत्तदादि जाग्रत् भित्तिहतशिरा विलोकते द्वारम् ॥ २८ ॥

अङ्गदजाम्बवदाद्यैर्हनुमन्तं प्राहिणोत् प्लवङ्गेशः ।
शत्रुदिशि राघवकृते सारं जानाति तारतम्यज्ञः ॥ २९ ॥

दशकण्ठकण्टकहृतां दिशिदिशि सीतां विचिन्वतां मुख्यः ।
हनुमानगादवाचीं भाग्यात् प्राप्येत पद्धतिः सिद्धेः ॥ ३० ॥

तृषिता वानरसेनाध्युषितं बिलमेत्य सा स्वयंप्रभया ।
तत्तर्पिता च निरगात् तपसो बलमद्भुतं तपस्विजने ॥ ३१ ॥

कपयोऽब्धिविहतगतयः कृपया संपातिगृध्रपतिनोक्ताः ।
विविदुः सीतास्थानं पूर्वं वेद्यो हि नष्टसद्भावः ॥ ३२ ॥

जाम्बवता वृत्तविदा संविनुतो मारुतिः स्मरन् रामम् ।
ववृधेऽर्णवं स तर्तुं न वृथा स्याच्छक्तिरस्ति यदि समये ॥ ३३ ॥

॥ इति किष्किन्धाकाण्डः ॥

---

## ॥ अथ सुन्दरकाण्डः ॥

उपकार इव तनूमान् हनुमान् रामस्य मुद्रिकां धृत्वा ।
अतरत् समुद्रमदरः साध्यासाध्यार्थसाधकश्चतुरः ॥ १ ॥

मैनाकमुपचरन्तं मारुतिरादत्य सागरप्रहितम् ।
महता वेगेनागात् महतां कार्ये मनस्विनोऽवहिताः ॥ २ ॥

सुरसाह्यकरो हनुमान् सुरसां प्रहितां सुरैर्बलेक्षायै ।
द्विरसनमातरमजयत् वीरसहस्रेऽस्ति वीरतम एकः ॥ ३ ॥

पथि सिंहिकया रुद्धो मतिमान् मारुतिरसौ महावीरः ।
अतिकुपितस्तामवधीत् गतिरोधे कृतिपरा हि कुप्येयुः ॥ ४ ॥

अस्तंगते सवितरि प्रस्थाल्लम्बाचलस्य स हनूमान् ।
देवीं विचेतुमयतत द्रष्टा नष्टस्य गूढ एव चरेत् ॥ ५ ॥

भङ्गं लङ्कादेव्याः कृत्वा करताडनेन स हनूमान् ।
विजयं प्राप दुरापं धृष्णूनां जिष्णुतैव सर्वत्र ॥ ६ ॥

चन्द्रोऽङ्गुलिनिकरैरिव सान्द्रांशुभिरस्य हनुमतो लङ्काम् ।
अरिषु रुषा निरदिशदिव दुरितवतां दुःखकारणं सर्वम् ॥ ७ ॥

पृषदंशक इव हनुमान् द्विषतो दारान् विलोक्य निद्रालून् ।
सीतेयमिति न मेने सत्याः पत्या विना कुतो निद्रा ॥ ८ ॥

आरुह्य रावणगृहे चारुतमं पुष्पकं हृतं धनदात् ।
स्वर्गममन्यत हनुमान् सर्गश्चतुरस्य न सुखयेत् कं वा ॥ ९ ॥

रावणवशा निशीथे देवानां योषितोऽपि कपिमुख्यः ।
अविकृतचित्तोऽद्राक्षीत् चित्तं न जितेन्द्रियस्य विकृतिमियात्॥ १० ॥

शङ्कां विहाय हनुमान् लङ्कालङ्कारतममशोकवनम् ।
स जगाम यत्र सीता विशयो व्यपयाति सिद्धिकालेषु ॥ ११ ॥

घनपर्णशिंशुपाद्रुं हनुमानारुह्य शाखिकालीनः ।
सीतां दीनोऽपश्यत् विषादनं स्याद्वियोगिनीरूपम् ॥ १२ ॥

आरक्षकराक्षस्यो रूक्षाः सीतामतर्जयन् भीताम् ।
सा तद्दुःखान्यसहत मातेव सुता स्वतन्तुरिव शाटी ॥ १३ ॥

जातुचिदेत्य निशीथे यातुपतिर्जानकीं वशीकर्तुम् ।
अयतत न शशाक खलो वियति न तटिनी भुवः समारोहेत्॥ १४ ॥

धनसदनरत्नसुवसनकनकानि ददामि तेऽधुना सीते ।
इति रावणोऽब्रवीत्तां जाराः परदारलोभने चतुराः ॥ १५ ॥

द्रक्ष्यसि लङ्कामचिरादक्षयतूणोद्धृतेन बाणेन ।
रामेण संप्रदग्धां दुर्नयतो दुःखमेव दुष्टानाम् ॥ १६ ॥

त्रिजगद्विजयिभुजोऽहं भज मां सीते विमुञ्च रामं त्वम् ।
इति रावणोऽब्रवीत्तां जारः शास्त्रं पठेत् स्वदारेषु ॥ १७ ॥

सङ्घमपि रावणानामङ्गुल्यग्रेण राघवो हन्यात् ।
प्रापय मां रघुवीरं किं परशुर्गृह्यते तृणोच्छित्त्यै ॥ १८ ॥

चण्डो वैकुण्ठारिपुर्दशकण्ठः पुण्डरीकवदकुप्यत् ।
हितयातुमण्डलेभ्यो होत्रा स्पृष्टोऽपि दहति तं वह्निः ॥ १९ ॥

अन्तक इव पौलस्त्ये सन्तर्ज्य गते रघूत्तमस्य सती ।
असुमूर्षद्दुद्रूथनतः सुमहच्छीलं हि नासवः साध्व्याः ॥ २० ॥

प्राणद्विषमाशु जगत्प्राणसुतस्त्रातुमैच्छदुर्वीजाम् ।
रामकथामृतवर्षी समयोपकृतिं हि साधवः कुर्युः ॥ २१ ॥

वातसुतं वीक्ष्योच्चैर्भीता दुस्स्वप्नशङ्किनी सीता ।
नाथस्य सुखमकाङ्क्षत बोधोऽपि स्वप्नवद्धि भीतानाम् ॥ २२ ॥

अवरुह्य शिंशुपाद्रोः सवनाग्निशिखोपमां क्षमातनुजाम् ।
प्रणनाम साधु हनुमान् प्रणमन् साध्वीं जगत्यहो प्रथते ॥ २३ ॥

रामादिकुशलमुक्त्वा नाम स्वस्यापि स हनुमान् वाग्मी ।
समतोषयज्जनकजां रमणक्षेमेण राजते रामा ॥ २४ ॥

पवनतनुजोऽङ्गुलीयकमवनिसुतायै स रामनामाङ्कम् ।
प्रत्ययहेतोः प्रादात् दूत्यं समुपैति देशकालज्ञः ॥ २५ ॥

सीताङ्गुलीयकं तद्दत्तं प्रीत्या दृढं समालिङ्गत् ।
नाथबले विश्वासात् कातर्यं नाम कामिनीसहजम् ॥ २६ ॥

सामुद्रिकया पत्युः सा मुद्रिकयापि जनकजा मुमुदे ।
दूतवरप्रकटितया धृत्यै स्रोतासि तृणावलम्बोऽपि ॥ २७ ॥

आगश्चकार हनुमान् स्वागमनप्रकटनाय यातुपतेः ।
भङ्गेन वनतरूणां.लिङ्गं बलिनो हि वीर्यशृङ्गभिदा ॥ २८ ॥

त्रिजटास्वप्नोदन्तैर्विजयं रामस्य रावणस्य लयम् ।
भूजा मुमुदे ज्ञात्वा स्वजनप्राभ्र्ये हि सुजनसंमोदः ॥ २९ ॥

मारुतिचेष्टितकुपितः प्रेरितवान् कपिवधाय रक्षांसि ।
त्वरितं राक्षसराजः चरितमजानन्न वेत्ति गरिमाणम् ॥ ३० ॥

अक्षादिराक्षसजयी शिक्षां कपिरसहतेन्द्रजित्कलिताम् ।
साक्षात् ब्रह्मास्त्रेणी दक्षोऽप्यमरस्य वाचमनुसरति ॥ ३१ ॥

अज्ञजनरचितबन्धैः प्राज्ञो मुक्तोऽस्त्रबन्धतो हनुमान् ।
परितोषमन्तरगमत् परमास्त्रं न परबन्धनं सहते ॥ ३२ ॥

पौलस्त्यसदसि नीतो वलयितवालासनोपरि स्थित्वा ।
प्रत्यब्रवीद्धनूमान् अत्यौन्नत्यं रिपौ प्रकाश्यं हि ॥ ३३ ॥

हनुमद्वधमाज्ञप्तं कौणपपतिना विभिषणो न्यरुणत् ।
शास्त्रवचनैरनिन्द्यैः दूतवधे दुर्नयस्य कर्म स्यात् ॥ ३४ ॥

वालं कपेर्हनुमतो वासोभी रावणस्तु तैलार्द्रैः ।
संवेष्ट्य वह्निमददात् कण्टक एवोग्रदन्धने यतते ॥ ३५ ॥

सीताप्रार्थनयाग्निः प्रीतो वातात्मजस्य शीतोऽभूत् ।
चित्ते जहर्ष हनुमान् सत्युक्तिं वितथयेन्न देवोऽपि ॥ ३६ ॥

उत्प्लुत्य प्रतिमन्दिरमुत्सृज्य गृहं विभीषणस्य परम् ।
अदहल्लङ्कां हनुमान् कदनं कथमपि रिपोः कुले कार्यम् ॥ ३७ ॥

सीतादाहविशङ्की वातसुतश्चारणोक्तिमशृणोत् सः ।
सीताभावुकविषयां हितकृद्दैवं प्रदर्शयेत् कुशलम् ॥ ३८ ॥

जलधिजलसिक्तवालो ललनां रामस्य मारुतिर्नत्वा ।
प्रतिगन्तुमयतत जवात् कृतिविद्द्रुतमेव साधयेत् कार्यम् ॥ ३९ ॥

वद मासद्वयमवधिं मदसूनां राघवाय पवनसुत ।
इत्यब्रवीन्महीजा मानात् प्राणाः प्रिया न साध्वीनाम् ॥ ४० ॥

वासविवायसचरितं शीर्षगमणिमप्यदादभिज्ञानम् ।
आदत्त रामदूतो दूते प्रत्ययकरं ह्यभिज्ञानम् ॥ ४१ ॥

प्रत्यागते पवनजे वृत्तविदो मधु निपीय पथि नदतः ।
रामोऽशृणोत् कपिवरान् कामं वृष्टेः पुरः सुखं स्तनितम् ॥ ४२ ॥

दृष्टा सीतेति वदन् हृष्टं रत्नेक्षया कपी रामम् ।
नत्वोदन्तमवादीत् तत्त्वं संक्षिप्य वेदयेद्दूतः ॥ ४३ ॥

चूडामणिं स रामः क्रोडतले संनिवेश्य संभाव्य ।
गाढालिङ्गनमकरोत् रूढः साध्वीषु तादृशः स्नेहः ॥ ४४ ॥

॥ इति सुन्दरकाण्डः ॥

## ॥ अथ युद्धकाण्डः ॥

त्रिजगन्मङ्गलकारी विजयाय स रावणस्य रघुवीरः ।
निजसेनयाब्धिमगमत् भुजबलतो भूभृतां हि भुवनसुखम् ॥ १ ॥

ईक्षितमारुतिचरितो राक्षसराजोऽपि मन्त्रयामास ।
श्रीरामजयापेक्षी सर्वे स्वोत्कर्षमेव वाञ्छन्ति ॥ २ ॥

भ्रातरमादरतो हितवादरतं तं विभीषणं वाचा ।
अव्यथयत् पौलस्त्यो न व्याघ्रस्य स्वकीयपरकीये ॥ ३ ॥

शरणं रामं मत्वा सरणिभ्रष्टं विभीषणो विद्वान् ।
तत्याज रावणं तं स्वाङ्गुलिमपि सन्त्यजेत् भुजगदष्टाम् ॥ ४ ॥

अनुजं रक्षोनेतुर्हनुमानायान्तमानयन् रामे ।
व्यज्ञापयत् सहृदयं प्राज्ञानां प्राज्ञ एव सद्बन्धुः ॥ ५ ॥

सन्धेयो न हि शत्रू रन्ध्रान्वेषीति वादिनं रामः ।
सान्त्वयति स्म कपीन्द्रं सन्ततसमदृष्टयो हि सन्तः स्युः ॥ ५ ॥

तमपि त्वामिव मन्ये समचित्तो मित्र रावणावरजम् ।
लङ्काप्यस्मै दत्ता शङ्का शरणागते न कार्या हि ॥ ७ ॥

सचिवचतुष्टयसहितः पावनचरितः स रावणावरजः ।
रामस्य हितकरोऽभूत् विषसोदरमेव जीवयत्यमृतम् ॥ ८ ॥

विदधे विभीषणोऽसौ वचसा विविधेन रामसाहाय्यम् ।
सविधस्थ एव समितौ न विनश्येन्मान आन्तरोन्मुक्तः ॥ ९ ॥

कुशशायी दाशरथिः स शरणमकृताम्बुधिं कृते सेतोः ।
आप्तविभीषणवचनात् आप्नोति फलार्थ्यहो गुरुर्लघुताम् ॥ १० ॥

रघुवीरस्तदुपेक्षित आग्नेयं सन्दधे धनुष्यस्त्रम् ।
शोषयितुं सरिदीशं रोषो महतां नितान्तमविषह्यः ॥ ११ ॥

गङ्गादिजलधिदारा माङ्गल्यं प्रार्थयन्त रघुवीरम् ।
सङ्घीभूताः शश्वत् किं मानं भिक्षया विना विरमेत् ॥ ११ ॥

निजदारैरनुनीतं स जलधिरगमद्रघूत्तमं शरणम् ।
विगलितमदो विनम्रः सगणः शरणागतोऽभिरक्ष्येत ॥ १३ ॥

दुस्सहमाग्नेयास्त्रं निस्सारयति स्म राघवश्वान्तः ।
असुरेषूदधितारे वज्रं शीर्षे हि पापिनां पतति ॥ १४ ॥

उदधिः पर्वतसेतुं व्यदधात् प्लवमानमेव निजसलिले ।
कुहनामनुजदयाप्तौ महतां साह्ये महान्त एव स्युः ॥ १५ ॥

हनुमन्तं युवराजं भानुकुलीनावुभौ समारुह्य ।
लङ्कापुरीमगमतां किंकरलाभे हि तुङ्गता भवति ॥ १६ ॥

मातामहादिकथितं सीताप्रत्यर्पणं हि पौलस्त्यः ।
हितमनवेत्याकुप्यत् दशति श्वा कूपतः समुद्धर्तॄन् ॥ १७ ॥

प्रथमसमरे स रामः पौलस्त्यं प्राणमात्रपरिशिष्टम् ।
तस्याजामितलज्जं मृतमारणमनुचितं हि वीराणाम् ॥ १८ ॥

फणिपतिरिव फूत्कुर्वन् पौलस्त्योऽगान्नरेन्द्रपुत्रेण ।
धीरेण रुद्धमुक्तो दुष्टतमः शिक्षयातिरुष्टः स्यात् ॥ १७ ॥

मन्दमतिं पतिमवदन्मन्दोदर्यप्युपास्स्व रघुवीरम् ।
कन्दर्पोपममेव हि सुन्दर्यः काश्चिदेव वन्द्यगुणाः ॥ २० ॥

मायीन्द्रजिदुरगास्त्रं काये सुदृढमपि रामलक्ष्मणयोः ।
तार्क्ष्यच्छायात्रुटितं दाक्ष्यं कालोचितं हि भृत्यस्य ॥ २१ ॥

ब्रह्मास्त्रादिन्द्रजितो रामादींस्तानमोचयद्धनुमान् ।
आनीयौषधिगिरिमपि हन्यात् कोऽन्यो रवेस्तमोबन्धम् ॥ २२ ॥

स निकुम्भिलां जयेष्टयै प्रययाविन्द्रजिदिति स्म रामाय ।
स विभीषणो न्यवेदयत् अहिचरणान् वेत्ति नूनमहिरेव ॥ २३ ॥

सौमित्रिरिन्द्रजयिनः सवनं हत्वा शिरश्चकर्तासौ ।
कपियुवराजधृतः सन् शत्रुकुलं नेत्रगोचरं नाश्यम् ॥ २४ ॥

मस्तकमिन्द्रजितस्तं न्यस्तं पुरतो विलोक्य रामोऽपि ।
ध्वस्तममन्यत शत्रुं वस्तु विनश्यति जवेन हृतसारम् ॥ २५ ॥

निजघान कुम्भकर्णं विजयीन्द्रवदद्रिमाशु रघुवीरः ।
स जले पपात सिन्धोः सुजनध्रुगलं व्रजत्यकालवधम् ॥ २६ ॥

कोदण्डबद्धघण्टा दशकण्ठप्रहितमूलबलनाशे ।
नदति स्म सा मुहूर्तं सत्यां तृप्तौ हि भवति सन्नादः ॥ २७ ॥

राघव आरुह्य रथं माघवतं रावणेन रथिकेन ।
लाघवदर्शी युयुधे श्लाघनमर्हति समानयोः समरः ॥ २८ ॥

रावणवधे स युक्तिं रामाय विभीषणोऽपि धर्मात्मा ।
व्यज्ञापयन्मिथोऽसौ प्रथमं ज्ञातिस्ततोऽनलो दहने ॥ २९ ॥

रामास्त्रसंहतासू रावण उर्व्यां तदैव निपपात ।
नष्टोत्तमाङ्गनिचयो नश्यति वल्मीकमृक्षनिर्भिन्नम् ॥ ३० ॥

सीतां निसर्गपूतां पूतामिव जातवेदसाऽपश्यत् ।
भीतोऽवाच्याद्रामो नेतृभ्यः कीर्तिरेव रोचेत ॥ ३१ ॥

वृषहंसराजवाहौ दशरथराजोऽप्युपेत्य रघुवीरम् ।
प्रशशंसुरवनिजामपि दिशति हि महदादरो यशो विमलम् ॥ ३२ ॥

आरुह्य पुष्पकं तद्भ्रात्रा पत्न्या बलैः सहायोध्याम् ।
त्वरितं प्रययौ रामः पौरान् दूरं गता दिदृक्षन्ते ॥ ३३ ॥

अनलप्रवेशनिश्चयमनिलसुतोऽपानयत् स भरतस्य ।
प्रथमं रामप्रहितो नात्येति हि वर्त्म सत्यसन्धत्वम् ॥ ३४ ॥

मणिमयपीठे रामं विनिवेश्य ससीतमभ्यषिञ्चत्तम् ।
मुनिगणयुतो वसिष्ठो न निरर्थाः सुमहतां महारम्भाः ॥ ३५ ॥

कैङ्कर्यराज्यलोभादङ्गीकृतराज्यभारमवतार्य ।
रामे ननन्द भरतो भूमेर्भरणे हि भूरिसंक्लेशः ॥ ३६ ॥

सीतालक्ष्मणभरतैः शत्रुघ्नेन च हनूमता च समम् ।
रामोऽध्यवसदयोध्याम् आमोदः स्याच्चिरादपि नराणाम् ॥ ३७ ॥

॥ इति युद्धकाण्डः ॥

---

## ॥ अथ उत्तरकाण्डः ॥

---

संप्राप्तराज्यमृषयः संप्रापुः कुम्भजादयो रामम् ।
द्रष्टुं रिपुवधमुदिताः हितलाभं स्यात्कृतज्ञता हि सताम् ॥ १ ॥

अभ्येत्य तान् महर्षीनभ्यर्च्य च साधु रामभद्रोऽसौ ।
तत्स्वागतेन मुमुदे सत्संगतिरुत्सवाय सम्राजाम् ॥ २ ॥

रघुवीर जगद्रक्षो लघु रावणकुम्भकर्णशक्रजितः ।
अवरजसहितो जित्वा भुवनावनमेव सवनमवनिभृताम् ॥ ३ ॥

इति रामोऽगस्त्यनुतो व्यतिविस्मित एव रावणेर्बलिताम् ।
पप्रच्छ मुनिवरं तं संप्रश्नो भवति संशयोच्छित्त्यै । ॥ ४ ॥

प्राह पुराविदगस्त्यो व्याहारज्ञस्तदा स्म रघुनाथम् ।
रावणकुलमामूलात् न विशति हृदयं खिलीकृता हि कथा ॥ ५ ॥

राघव मरीचिमत्रिं चाङ्गिरसमजीजनत्पुलस्त्यं च ।
पुलहं क्रतुं च धाता गृहिणां स्वहिताय पुत्रबाहुल्यम् ॥ ३ ॥

तृणबिन्दुसुता सुषुवे तनयं रघुवर पुलस्त्यमुनिमहिषी ।
गुणवन्तं विश्रवसं गुणिनं या सौति सा किलावन्ध्या ॥ ७ ॥

राम भरद्वाजसुता श्रीमन्तं सुतमसूत वैश्रवणम् ।
पत्नी सा विश्रवसः सुफलं जनयति हि मेरुकल्पलता ॥ ८ ॥

संक्रामितः स्वपित्रा लङ्कामज्ञातराक्षसावासाम् ।
तत्राभूद्वैश्रवणो भद्रं प्राप्नोति पितृगिरा पुत्रः ॥ ९ ॥

विधिसृष्टा जलमवितुं कतिचन यजनेन यक्षतामगमन् ।
रक्षस्त्वमवनतोऽन्ये वीक्ष्यत एवं स्वधर्मतो जातिः ॥ १० ॥

हेतिः प्रहेतिसोदर उदजनयद्राम शमनसोदर्याम् ।
विद्युत्केशं रक्षः ह्युद्भवति भुजङ्गतो महागरलम् ॥ ११ ॥

विद्युत्केशाय वने सद्यस्त्यक्ताय मत्तया मात्रा ।
तारुण्यमदाद्गौरी कारुण्यं सर्वतोमुखं गौर्याः ॥ १२ ॥

रक्षःस्त्रीरूक्षत्वं वीक्ष्य भवानी तदादि यातूनाम् ।
जनने युवत्वमकरोत् जनयति वृष्टिर्हि सौख्यमखिलानाम् ॥ १३ ॥

विद्युत्केशसुभार्या गन्धर्वग्रामणीजदेवपती ।
दुष्टसुतान् सुषुवे त्रीन् विष्टपदाहाय वह्निसङ्घातः ॥ १४ ॥

विधिवरमत्ता देवान् युधि मालिसुमालिमाल्यवन्तोऽघ्नन् ।
क्षतिमविदन्तो राघव वृद्धिमियाच्चेज्जगद्दहेदग्निः ॥ १५ ॥

लङ्कामध्यूषुस्ते शङ्कारहिता विनिर्मितां त्वष्ट्रा ।
राम तदा जगदहिता जिह्मगवासाय भवति वल्मीकम् ॥ १६ ॥

सुन्दर्यथ केतुमती वसुदा गन्धर्वनिर्मदापुत्र्यः ।
मालिमुखानां भार्या वल्लीनां कण्टकद्रुमा रुचिराः ॥ १७ ॥

प्रसमेतशस्तहस्तौ सविरूपाक्षं तथैव धूम्राक्षम् ।
मत्तोन्मत्ताकम्पनसंपातीन् दुर्मुखं च नव तनयान् ॥ १८ ॥

पुष्पोत्कटादिपुत्री र्निष्पादितवन्त एव माल्याद्याः
उग्राः सुताश्च राम व्याघ्रशिशूनां बिडालता किं स्यात् ॥ १९ ॥

विबुधार्थितविष्णुहते मालौ लङ्कां विहाय रक्षांसि ।
पातालमयुर्द्वाभ्यां आत्मप्राणाः प्रिया हि सर्वेषाम् ॥ २० ॥

अथ केकसी स्वपित्रा प्रहिता विश्रवसमेत्य पुत्रांस्त्रीन् ।
लेभे सुतां च तस्मात् अभ्युदयं याति वीरसूर्नूनम् ॥ २१ ॥

पितृसङ्गकालदोषात् सा रावणकुम्भकर्णदारुणता ।
शूर्पणखाया दौष्ट्यं कालो हि करोति यत्तथा नान्यत् ॥ २२ ॥

तातानुग्रहवशतः सात्त्विकताभूद्विभीषणस्य तथा ।
केकस्यास्तनयस्याप्येकस्यैवाङ्गुलीषु भेदोऽस्ति ॥ २३ ॥

वर्धयति स्म सुतेर्ष्यां निर्दिश्य विमानगं च लङ्केशम् ।
केकस्यपि वैश्रवणं सापत्न्यं दुःखमेव रघुनाथ ॥ २४ ॥

वनभूतले दशशिरा अनुवर्षसहस्रमेकमूर्धानम् ।
छित्वा जुहाव वह्नौ चित्तं धीरं हि रक्षसां राम ॥ २५ ॥

छिन्नशिरसां जनिमसौ जन्येऽपि नरेतरैरवध्यत्वम् ।
प्राप विधेर्दशकण्ठः पापः स्वस्थैर्यमेव साधयति ॥ २६ ॥

विज्ञानं ब्रह्मास्त्रज्ञानं विजितापमृत्युतां च महान् ।
धातुर्विभीषणोऽगात् सेतुर्ज्ञानामृतस्य कोऽपि स्यात् ॥ २७ ॥

द्राघीयसीं च दूरीकृतबोधां कुम्भकर्ण ऐन्निद्राम् ।
वाण्यावेशेन तदा शून्यो लोको ह्यहेर्न चेन्निद्रा ॥ २८ ॥

सुबलसुमालिप्रेरितरावणवचनं प्रहस्तमुखगदितम् ।
धनदः श्रुत्वात्रस्यत् मानधनानां मनांसि भीतानि ॥ २९ ॥

ताताज्ञया कुबेरस्त्राता लङ्कां जहावदगादलकाम् ।
लङ्कां च रावणोऽगात् दुष्टान् दृष्ट्वा सुदूरतोऽपसरेत् ॥ ३० ॥

मयहेमापुत्री सा दुन्दुभिसहजा तु रावणेनोढा ।
मन्दोदर्यतिसाध्वी मन्दाकिन्यान्वितो हि लवणाब्धिः ॥ ३१ ॥

वैरोचनदौहित्रीं वज्रज्वालां स कुम्भकर्णोऽपि ।
स्वानुगुणामुपयेमे यूनोः स्त्रीपुंसयोर्विधिर्घटकः ॥ ३२ ॥

सरमां शैलूषसुतां पर्यणयत्तां विभीषणः साधुः ।
स्वमतानुसारिधिषणां समुपैति सतां कुतोऽपि सद्वस्तु ॥ ३३ ॥

समदः स रावणोऽसौ समजनयन्मेघनादमिन्द्रजितम् ।
मन्दोदर्यां वीरं सन्धुक्षयति स्वरुं घनो हि दिवि ॥ ३४ ॥

साधुत्वमीशसख्यं बुद्ध्वा मम पालयेति दूतगिरा ।
रावणमवदद्धनदो नावमतोऽप्येति साधुरहितत्वम् ॥ ३५ ॥

धनदोदिताहितवादिनमनयमती रावणोऽवधीद्दतम् ।
नो वेत्ति हितं मूढो धावति कटु रटति बोधितोऽपि खरः ॥ ३६ ॥

निर्जित्य राजराजं दौर्जन्येनैव रावणश्चण्डः ।
मुख्यं पुष्पकमहरत् मूर्खाणां बोधको भवेच्छत्रुः ॥ ३७ ॥

स्तम्भितपुष्पकमहसत् कैलासे नन्दिनं स पौलस्त्यः ।
कोऽयं प्लवङ्गमुख इति स्वीयं न स्मरति कोऽपि वैरूप्यम् ॥ ३८ ॥

प्लवगाद्भयं भवेत्तव रावण दुष्टेति रोषतो नन्दी ।
तूर्णं शशाप दत्तं स्पृष्टो वैश्वानरो दहत्येव ॥ ३९ ॥

कैलासं पौलस्त्योऽचालयदार्योरसा ममर्द शिवम् ।
स पदाङ्गुष्ठेनाद्रिं द्विपयुद्धे पीड्यते हि मध्यस्थः ॥ ४० ॥

ईशविमर्दितपर्वतहिंसितविंशतिभुजस्तु पौलस्त्यः ।
गिरिणा तेन न मुमुचे परिमोच्या न हि करं त्यजेद्रोधा ॥ ४१

अस्तौदब्दसहस्रं मन्त्रिप्रहितः शिवं स पौलस्त्यः ।
सामभिरखिलश्राव्यैः उत्प्लवमानो वृषो बिभर्ति भरम् ॥ ४२

ईशेनानुगृहीतो मोचितभुजमण्डलो वरान् दिव्यान् ।
लङ्केशोऽगान्मुदितः सङ्कटमुक्तः प्रयाति भद्राणि ॥ ४३ ॥

सर्वत्र राक्षसेशो निर्बाधं सञ्चरन् स्वयानेन ।
जात्वगमद्धिमवन्तं नेतू रम्ये स्थले निवासः स्यात् ॥ ४४ ॥

निशिचरपतिः कुशध्वजकन्यां सन्न्यासनियमिनीं साध्वीम् ।
वेदवतीमयमैच्छत् मोदाय हि कामिनां भवेत्कापि ॥ ४५ ॥

दम्भुरिति दैत्यराजो मत्पितरं हरय एव मां दित्सुम् ।
अवधीन्मातानुमृता दैवं दुरतिक्रमं हि बलिभिरपि ॥ ४६ ॥

मम दानवेतरवरं मृगयन्तावगमतां मृतिं पितरौ ।
तन्मतमेव मदिष्टं जनयित्रोः प्रीणनं हि जन्मफलम् ॥ ४७ ॥

आत्मनिराकृतरावणकृष्टानलकान् करेण वेदवती ।
क्रकचवदेव चकर्त च न खलु सती खलजनाक्रमं सहते ॥ ४८ ॥

पौलस्त्येतरजन्मनि मूलत्वं त्वद्वधस्य यास्यामि ।
इति सोक्त्वाविशदनलं बत कामान्धाः पतन्ति दुःखाब्धौ ॥ ४९ ॥

वेदवती सीताभूज्जातो जगदेकवीर एव भवान् ।
संरक्षणाय जगतां धीरा ये निर्वहन्ति ते सन्धाम् ॥ ५० ॥

मखदीक्षितं मरुत्तं रघुनाथोशीरबीजदेशेन्द्रम् ।
पौलस्त्योऽगाद्योद्धुं बालिशजनता न वेत्ति खलु नियमम् ॥ ५१ ॥

नाभिययौ पौलस्त्यं पापिनमाकारितोऽपि स मरुत्तः ।
गुरुसंवर्तनिरुद्धो गुरुवचनं पथ्यमेव शिष्याणाम् ॥ ५२ ॥

ऋकलासहंसवायसकेकिसरूपाः क्रतोः पलायन्त ।
पौलस्त्यभिया सेन्द्रा आलोक्य हि दुष्टमपसृतिर्न्याय्या ॥ ५३ ॥

जिगमिषुर्जीवमयोध्यापतिमनरण्यं व्यधात्स पौलस्त्यः ।
प्राकारबाह्ययुद्धे नाकारणनामता ह्ययोध्यायाः ॥ ५४ ॥

प्राणविपद्यनरण्य कौणपनाथं शशाप मत्कुलजः ।
त्वामपि हनिष्यतीति द्रोग्धुः परतो भयं ध्रुवं भवति ॥ ५५ ॥

एवमनरण्यशप्तं रावणमध्वनि स नारदोऽस्तावीत् ।
यमतोऽन्ये जय्या इति न मनः सहते प्रभोः परोत्कर्षम् ॥ ५६ ॥

नारदनुतिजव्रीळो वीरः कालं विजेतुमाशु ययौ ।
संयमिनीं दशकण्ठः संयति धीरो बिभेति न हि कस्मात् ॥ ५७ ॥

नारकिमोचनकुपितान् पौलस्त्योऽन्तकभटांस्तदाधाक्षीत् ।
पाशुपतास्त्रज्वलनैः केसरिणो जम्बुकाः कियन्मात्राः ॥ ५८ ॥

रावणयमयोर्युद्धं प्रावर्तत सप्तरात्रमतिघोरम् ।
दाशरथे किमतोऽद्भुतम् आशरपतिरितियमस्त्वया विजितः ॥ ५९ ॥

शमनधृतकालदण्डं स्वमपि महास्त्रं युधि स्वनप्तृधृतम् ।
वीक्ष्य विधिर्यममरुणत् रक्ष्यं न स्यात्स्वगौरवं केन ॥ ६०

अन्तर्दधे कृतान्तः शान्तः परमेष्ठिवचनगौरवतः ।
दशवदनोऽभाजयिवत् विजयी वादी विवादिविरहे स्यात् ॥ ६१

भोगवतीपतिवासुकिभोगिजयी रावणो महिमवत्याम् ।
मुमुदे निवातकवचैः मृदुलैव मही जनैर्हि खन्येत ॥ ६२ ॥

यातुपतिरश्मनगरे विद्युज्जिह्वं स्वसुः पतिं ह्यवधीत् ।
जितकालकेयनिचयो न तरक्षोः स्ववनमपरवनमिति वा ॥ ६३ ॥

ज्ञात्वेन्द्रसविधभाजं वरुणं तत्पुरि तदात्मजान् जित्वा ।
काप्यहरद्बहुकन्या दर्पः कन्दर्पवशगतां कुर्यात् ॥ ६४ ॥

पतिवधखिन्नां भगिनीं पङ्क्तिमुखः सान्त्वयन् जनस्थाने ।
आसयदधिखरगेहं वासः पतिविपदि जनिगृहे स्त्रीणाम् ॥ ६५ ॥

अयजत्स मेघनादः कालीवसतौ निकुम्भिलाक्षेत्रे ।
शिवतोऽगाद्दुर्जयतां भवति फलं वागतीतमुद्यमिनाम् ॥ ६६ ॥

देवार्चकं निजसुतं रावण एनं विनिन्द्य सह तेन ।
हृतकन्याः पुरमनयत् हृतकैर्बहुमन्यते दुराचारः ॥ ६७ ॥

पौलस्त्यमन्यकन्याकुलहृतमनघो विभीषणोऽनिन्दत् ।
रघुनायक तव दासो न खलो रोचेत साधवे नूनम् ॥ ६८ ॥

समरे त्वमहं तपसि स्वापेऽन्यो मेघनाद इज्यायाम् ।
मधुरस्मद्गृहमविशत् यत्र न नाथस्तदेति भवनं श्वा ॥ ६९ ॥

त्वद्भिन्नोदरभगिनी सुप्ता कुम्भीनसी हृता मधुना ।
माल्यवतो दौहित्री शल्यं मनसो भृशं ददात्यनयः ॥ ७० ॥

माल्यवतो म्लानिरभूत् पौलस्त्यान्याबलाबलात्कारात् ।
सोऽन्तर्गृहेऽस्ति नूनं सन्ततिकलुषं ह्रियै हि वृद्धानाम् ॥ ७१ ॥

मधुनगरमगात् कुपितो यातुपतिः पुरि विभीषणं न्यस्य ।
सानुजकनिष्ठपुत्रः को नु दुरात्मा स्वदुष्कृतं वेत्ति ॥ ७२ ॥

स्वस्रा कुम्भीनस्या सास्रं परिसान्त्वितः स लङ्केशः ।
मैत्रीमकरोन्मधुना न बीहच्छिक्ष्यते मतस्तस्याः ॥ ७३ ॥

मधुपुरनीतनिशोऽसौ मधुनायान् स्वर्जयाय पौलस्त्यः ।
पथि पश्यति स्म रम्भां विधिना प्रत्युत विचेष्टते दुष्टः ॥ ७४ ॥

कैलासे कौमुद्यां नलकूबरमभिसरन्त्यनेन हृता ।
भुक्ता बलाच्च रम्भा व्यक्तो नक्तञ्चरे बलात्कारः ॥ ७५ ॥

रम्भावेदयदखिलं त्र्यम्बकसखजाय रावणाविनयम् ।
पथ्यात्मखेदहेतुं तथ्योक्त्या स्थैर्यमेति विश्वासः ॥ ७६ ॥

शीर्यन्तु सप्तधा दश शीर्षाण्यस्यावशाङ्गनाक्रमणे ।
इति धनदजोऽशपत्तं कुट्टनपात्रं पुमान् हि कुप्येत ॥ ७७ ॥

आत्मप्रार्थितविष्णौ ब्रह्मवरबलं विचिन्तयति शक्रः ।
दिवि रावणेन युयुधे तिष्ठति दर्शः किमाग्रजागमनम् ॥ ७८ ॥

सवितृजवसुः सुमालिं त्ववधीदमरांस्तु कुम्भकर्णोऽसौ ।
व्यद्रावयत्सरोषः पराजयं शौर्यवान् हि न सहेत ॥ ७९ ॥

युद्धे रुद्धजयन्तो बद्ध्वा बत मेघनाद इन्द्रं तु ।
लङ्कामनयद्विजयी सन्नूह एव हि वधाधिकोऽरीणाम् ॥ ८० ॥

आहवकृतमखजरथारोहोत्थाजय्यतां विधिः प्रादात् ।
इन्द्रजित इन्द्रमुक्त्यै नन्दित एव प्रसीदति प्रबलः ॥ ८१ ॥

इन्द्रोऽहल्याजारो गौतमशापेन रिपुवशो धात्रा ।
हरिमखपावित ऐदूयां परिहरणादंहसां सुखं भवति ॥ ८२ ॥

राघवपृष्टोऽगस्त्यो द्रागवदत्तत्र रावणापजयम् ।
क्वचन क्वचन प्राप्तं गच्छद्भिः प्राप्यते पदि स्खलनम् ॥ ८३ ॥

माहिष्मत्या रेवां याहि युयुत्सुस्त्वमर्जुनस्तत्र ।
इति सचिवोक्तो रावण उचितं समयोर्विवाहयुद्धे द्वे ॥ ८४ ॥

वारिविहारेऽर्जुनकरवारितमुक्ताम्बुरेवयासेचि ।
नियमस्थो दशकण्ठो ह्रियमल्पेनापि नीयते सुमहान् ॥ ८५ ॥

बलिपुष्पकर्षि सद्यः पुलिने स्रोतः समीक्ष्य रेवायाः ।
चुक्रोध स पौलस्त्योऽत्युग्रो मनुतेऽप्यचेतनेदौष्ट्यम् ॥ ८६ ॥

प्रहितशुकसारणाभ्यामहितकृदध्यर्धयोजनेऽस्तीति ।
ज्ञात्वाभ्ययाद्दशास्यो मन्तुर्न स्यादबुद्धिपूर्वकृतम् ॥ ८७ ॥

कृतकेली रेवायां कृतवीर्यसुतोऽग्रहीत् सहस्रभुजः ।
विजिगीषुं पौलस्त्यं भुजगो वशतामियान्नरेन्द्रस्य ॥ ८८ ॥

हैहयपतिना रुद्धो गेहे लङ्केश्वरः स्वकलितेन ।
नूतेन चिरमजीवत् भृत्या जीवति विपद्यहो श्रीमान् ॥ ८९ ॥

तत्याज कार्तवीर्यः सत्यादेत्यार्थितः पुलस्त्येन ।
संमान्य रावणं तं संमान्यं खलु महात्मानां वचनम् ॥ ९० ॥

ऋक्षरजाः कपिरब्जजमोदाश्रुभवोऽधिमेरु जलदृष्टे ।
बिम्बेऽरिधिया न्यपतत् जात्यनुगुणमेव चेष्टते जन्तुः ॥ ९१ ॥

मज्जन् स्त्रीभूत्वा दिनमिन्द्रार्कनिषिक्तवालगल एषः ।
प्रासूत वालिसुगलौ भवितव्यं केन वा निवार्येत ॥ ९२ ॥

पितृदत्तकनकभूषणधरणहृतापरबलार्धमनवेत्य ।
वालिनमगाद्दशास्यो मालिन्यं व्रजति धीर्भृशौत्सुक्यात् ॥ ९३ ॥

सन्ध्योपास्त्यै दक्षिणसिन्धुस्थं वालिनं बबन्ध करैः ।
पार्ष्णिगतो दशकण्ठः शीर्षे नवनीतमर्पयति बकहृत् ॥ ९४ ॥

रक्षोऽधिपं तु वाली कक्षेणादाय जलधिषु चतुर्षु ।
नियमं चरन् पुरमगात् दयते वा दर्दुरस्य भोगीन्द्रः ॥ ९५ ॥

किष्किन्धायां भ्राम्यन् विष्किरमिव रावणं दधद्वाली ।
पर्यहसन्मुक्त्वैनं कुर्याच्छौर्यं महान् महत्येव ॥ ९६ ॥

उज्झित आशरनाथो लज्जित आसाद्य वालिना सख्यम् ।
अनलाभतः पुरमगात् अनवाप्ता चेच्छिखाङ्घ्रिमादत्ते ॥ ९७ ॥

तं वालिनमप्यवधीः किं वा रावणबलेन रघुवीर ।
तावकबलमेव बलं नैवार्कस्येव तेज इतरेषाम् ॥ ९८ ॥

सुग्रीवहितो हनुमानुग्रबलोऽहन्न वालिनं कस्मात् ।
इत्यत्र मुनिरवोचत् सत्यं हि वदन्ति सज्जनाः पृष्टाः ॥ ९९ ॥

केसरिकपिजायायां श्वसनेनोत्पादितोऽञ्जनाख्यायाम् ।
दासस्तव रामायं न स्याद्व्याघ्रार्भको हि मार्जारः ॥ १०० ॥

फलहरणाय जनन्यां चलितायां शैशवेऽयमनिलसुतः ।
फलबुद्ध्यार्कमुपागात् बालो वत्सो भयं न जानाति ॥ १०१ ॥

नार्कोऽनिलशिशुमतपत् कार्कश्यादस्य भीतितोऽश्वात्रत् ।
राहुगिरेन्द्रोऽप्यश्रृणोत् साहसिको द्रुतमुपैति विख्यातिम् ॥ १०२ ॥

ऐरावतमारुह्य स्वाराट् सुरसैन्ययादधद्वज्रम् ।
मारुतिमभिदुद्राव स्थूलगदाल्पीयसोऽप्यहेर्हनने ॥ १०३ ॥

अपहृतमर्कं त्यक्त्वा सुफलं मत्वागतं वळक्षगजम ।
स पवनतनयोऽगृह्णात् प्राप्तफलो नापचेयफलमिच्छेत् ॥ १०४ ॥

भीतं फीत्कुर्वन्तं मातङ्गं वीक्ष्य जिष्णुरनुकम्पी ।
वातजमहन् हनौ मृदु पोतस्यालं क्षमाय तृणपातः ॥ १०५ ॥

अवनौ पतितस्तान्तः पवनसुतोऽश्माहतान्यहनुरेषः ।
प्रबलो रामामूर्च्छत् विफलं हि बलं दशास्वनर्हासु ॥ १०६ ॥

अतिकोपमाप वातस्त्रिदिवेशागोऽसहिष्णुरखिलानाम् ।
कृतनिश्वासनिरोधः पितरो जानन्ति पुत्रदौर्लभ्यम् ॥ १०७ ॥

श्वसनो निजशिशुकदनव्यसनेनास्तम्भयज्जगत्सर्वम् ।
वासवकृतापराधात् असदेकश्चरति फलवती जनता ॥ १०८ ॥

आश्वास्य मारुतिमदाद्विश्वसृडस्मा अवध्यतां स्वास्त्रैः ।
जातु क्षणवध्यत्वं धातुर्गीर्नैति मोघतां जगति ॥ १०९ ॥

दिक्पालदत्तवरतो दृप्तो हनुमान् मुनीन्निपीडयाभूत् ।
तच्छापविस्मृतबलो गच्छति शान्तिं हि ताडितो वृषभः ॥ ११० ॥

मुनिशापशान्तहनुमान् भानोः समधीत्य शब्दशास्त्राणि ।
अध्यापकसुतमभजत विद्यावंश्यस्य भजनमुचितं हि ॥ १११ ॥

श्रीरामचन्द्र हनुमान् धीरस्त्वदनुग्रहाद्यथापूर्वम् ।
वीराग्रणीः समभवत् बलमेति किलाबलो रसायनतः ॥ ११२ ॥

आगम्यतां भवद्भिर्यागाय ममेति रामचन्द्रोक्ताः ।
तेऽगुरगस्त्यादिबुधा नो गुरवोऽनेहसो नयन्ति मुधा ॥ ११३ ॥

जनकयुधाजिद्भूपौ प्रतर्दनः काश्यधीश इतरनृपाः ।
रामार्चिताः पुरीरयुः आमन्त्र्यन्त हि निशाटहतये ते ॥ ११४ ॥

द्युमणिसुतः किष्किन्धां रामानुमतो विभीषणो लङ्काम् ।
आप च पुष्पकमलकां नापरधनगृध्नुतापि रामस्य ॥ ११५ ॥

रक्षन् राज्यं रामो रक्षोहृतसीतयैव सहित इति ।
अश्रृणोज्जनापवादं वशिनां हृदयं न किल्बिषं सहते ॥ ११६ ॥

जातूपवने सीतां साकूतगिरैव गर्भिणीं रामः ।
वनवासरुचिं जज्ञौ वनितामुद्वेजयेद्धि न दयालुः ॥ ११७ ॥

स सुमन्त्ररथे लक्ष्मण वसुधापुत्रीं निवेश्य तूर्णीं त्वम् ।
नय वनमिति रामोऽशात् प्रियवस्त्वपि कारणं ह्रियस्त्याज्यम् ॥ ११८

विपिनं नीत्वा सीतामपवादविभीतरामवचसैव ।
प्ररुरोद लक्ष्मणोऽलं चिरपोषकजनविमुक्तिरविषह्या ॥ ११९ ॥

राक्षसबाधा सोढा लक्ष्मण दुःखं समुत्थमिदमधुना ।
नित्यविषादाहं किल मित्या किं स्रोतसोऽतिशीर्षस्य ॥ १२० ॥

सीतादुःखमसोढ्वा तत्प्रोक्तं गर्भिणीत्यभिज्ञानम् ।
धृत्वा हृदि प्रतस्थे तत्त्वं शिष्यो गुरूक्तमवधत्ते ॥ १२१ ॥

श्रुतदीनव्याक्रोशः सीतामाश्वास्य जनकवत्पुत्रीम् ।
वाल्मीकिरुटजमनयत् धार्मिकचेतांसि वत्सलानि स्युः ॥ १२२ ॥

दैत्यावनरतपत्नीवधकुपितभृगूत्थविष्णुशापफलम् ।
सौमित्रये सुमन्त्रः समवादीद्दशरथाय दुर्वासाः ॥ १२३ ॥

सीतां त्यक्त्वा स्वनिकटगतमवरजमित्युवाच रघुवीरः ।
शोकं त्यज भज नीतिं दुःखं हि स्यात्प्रमाद्यतो नीत्याः ॥ १२४ ॥

दत्तां तु गां प्रमादाद्दत्त्वोभयपात्रदत्तशापेन ।
सरटोऽभून्नृगराजो गरलादधिकं हि भवति विप्रधनम् ॥ १२५ ॥

निमिनृपगुरुर्वसिष्ठो नमुचिरिपुमयाजयद्वृतः प्रथमम् ।
श्रीवैजयन्तपुरगो नैवाश्रुतमन्यथा भवेन्महताम् ॥ १२६ ॥

त्यक्त्वाचार्यं क्रुद्धः कृत्वा गुरुतां तु गौतमे निमिराट् ।
समपूरयत्क्रतुं स्वं स्वमहंकारं बुधोऽपि न हि शमयेत् ॥ १२७ ॥

नूत्नगुरुकं निमिनृपं प्रत्नो गुरुरेत्य सुप्तमशपत्तम् ।
विशरीरो भव राडिति शिष्यविलम्बं गुरुर्हि न सहेत ॥ १२८ ॥

वृषपर्वजशर्मिष्ठा शुक्रस्य सुतापि देवयानीति ।
नहुषजययातिभार्ये महिषीद्वयमात्मदुःखमावहति ॥ १२९ ॥

शर्मिष्ठासुतपूरुं भर्त्रतिलालितमवेक्ष्य शुक्रसुता ।
सस्मार गुरुं सेर्ष्या सापत्न्यं ह्यापदां परो हेतुः ॥ १३० ॥

शुक्रोऽभ्येत्य स्वसुतापुत्रानुपलालनाच्चकार रुषा ।
जामातरमपि सजरं सामर्ष्याः किं न कुर्युरविवेकात् ॥ १३१ ॥

तस्मात्सदाप्रमत्तैरस्माभिर्गुरुमतैः सुखमुपेक्ष्य ।
रक्ष्या जनता लक्ष्मण रक्षणमसिजालमध्यनृत्यं हि ॥ १३२ ॥

लक्ष्मणभरतरिपुघ्नाः तत्क्षणमारभ्य साधु रामाज्ञाम् ।
चिरमवतंसीचक्रुः शिरसः पूर्वजनिदेश आभरणम् ॥ १३३ ॥

कुम्भीनसीमधुसुतात् सम्भीता लवणतो ययू रामम् ।
यमुनावनस्थमुनयः शमनाद्बिभ्यति न विष्टपे को वा ॥ १३४ ॥

शत्रुघ्नो रामाज्ञां धृत्वा लवणाहवाय पथि रात्रिम् ।
वाल्मीक्युटजेऽनैषीत् कल्मषमपहन्ति नियमिसहवासः ॥ १३५ ॥

शत्रुघ्नागमरात्रौ पुत्रौ मैथिल्यसूत रामनिभौ ।
वाल्मीकिपोषिता सा ह्यात्मा पुत्रत्वमेति खलु लोके ॥ १३६ ॥

दिष्टयाम्ब वर्धसे त्वं दृष्टौ निजपितृसमौ सुताविति सः ।
हृष्टोऽवदद्रिपुघ्नः कष्टं ह्यपयाति पुत्रदृष्टयैव ॥ १३७ ॥

यज्ञस्थलं तु दृष्ट्वा जिज्ञासुः कौतुकेन वाल्मीकिम् ।
तदपृच्छच्छत्रुघ्नो न दधाति सुधीरनादरं वेद्ये ॥ १३८ ॥

वृत्तज्ञो वाल्मीकी रात्रौ कल्माषपादवृत्तान्तम् ।
शत्रुघ्नायावदीत् चित्रकथा दिशति बुद्धिवैशद्यम् ॥ १३९ ॥

व्याघ्रीभूयामिषभुजि मृगयूरक्षोयुगेऽवधीदेकम् ।
वीरसहः सौदासो नारण्ये ज्ञायते हि मृगवेषः ॥ १४० ॥

शेषोऽन्यो वासिष्ठं रूपं परिगृह्य नृपिशितं प्राथ्र्य ।
नृपसूदाकृतिरपचत् कपटेन जयन्ति निजरिपून् हि शठाः ॥ १४१ ॥

सौदासभूप आशरवश्योऽदान्नृपिशितं वसिष्ठाय ।
मुनिरस्मै पलभुक्त्वं जनयति तत्त्वानभिज्ञता दुःखम् ॥ १४२ ॥

मदयन्त्या स निरुद्धः प्रतिशापजलं तदात्यजत्स्वाङ्घ्रयोः ।
कल्माषपाद आसीत् क्षेमं विन्दन्ति केचन महिष्या ॥ १४३ ॥

कल्माषपादराजः कल्मषमात्तं वसिष्ठवाक्येन ।
द्वादशवर्षानचरत् स्याद्गुरुदययैव दुस्तरं सुतरम् ॥ १४४ ॥

शत्रुघ्नपार्थिवोऽसावत्र वने यजनतो विशुद्धोऽभूत् ।
रेजे च राजवर्यो जायेत सुखं हि दुर्विधेः शमने ॥ १४५ ॥

शिवदत्तशूलविरहे लवणो जय्य इति शुक्रवचसा तम् ।
शत्रुघ्नोऽहन् रक्षः कुत्राप्यनुपायविद्रिपुं न जयेत् ॥ १४६ ॥

द्वादशसमाः प्रशास्य स मथुरां शत्रुघ्न एव लवणपुरीम् ।
दृष्ट्वाग्रजं पुनरगात् ज्येष्ठाज्ञापालनं परो धर्मः ॥ १४७ ॥

जातु द्विजबालमृतेर्हेतुं प्रविवेद नारदगिरैव ।
शूद्रस्य तपो रामो भद्रं न स्यादनर्हधर्मेण ॥ १४८ ॥

स्मृतसान्निहितं पुष्पकमधिरुह्य चरन् रघूत्तमः शूद्रम् ।
तापसमुपैदवाच्याम् आपदि धर्मस्य किं विलम्बेन ॥ १४९ ॥

सशरीरं स्वर्जिगमिषुमसिना छित्त्वैव शम्बुकं रामः ।
द्विजसुतमजीवयत्तं ह्योषधिमुन्मूल्य जीवयत्यन्यम् ॥ १५० ॥

दिव एत्य पल्वलस्थं प्रतिदिनमाश्नात्स्ववर्ष्म वैदर्भः ।
श्वेतनृपतिस्त्वदानात् एतद्धि फलं भवेददातृणाम् ॥ १५१ ॥

मदनुग्रहेण पूतः श्वेतोऽदात्स्वाङ्गुलीयकं मह्यम् ।
रक्षितमिदं त्वदर्थं रक्षितयोग्यानि नाम रत्नानि ॥ १५२ ॥

इत्युक्त्वा रामायागस्त्यो दत्त्वोर्मिकामवादीत्सः ।
दण्डकनृपदुश्चरितं परपरिवादश्रुतिर्गुणो राज्ञाम् ॥ १५३ ॥

मुग्धः स विन्ध्यशैवलमध्ये मधुमत्पुरेऽवसद्दण्डः ।
इक्ष्वाकुसुतशतेऽन्तिम इक्ष्वाकुफलेऽपि काणबीजं स्यात् ॥ १५४ ॥

गुरुशुक्रसुतां दण्डो ह्यरजामाकृष्य सान्त्वतो मृगयुः ।
रेमेऽशपद्गुरुरुभौ कामः सुखदुःखकारणं नृणाम् ॥ १५५ ॥

इति कथयित्वागस्त्यस्तत्त्वज्ञः स्वाश्रमे रघूत्तंसम् ।
दर्शनमुदितोऽस्तावीत् को विनुयात्कैतकं नु न गुणज्ञः ॥ १५६ ॥

आगस्त्यादाश्रमतोऽयोध्यां पुष्पकवरेण संप्राप्य ।
प्रहिणोति स्म सपुष्पकम् आहितकार्यस्य साधनेन किमु ॥ १५७ ॥

नृपशतवधसाध्यमखं मुक्त्वानुजयोर्गिराश्वमेधमखम् ।
बहुमेने रघुवीरो युक्तं ग्राह्यं हि बालवचनमपि ॥ १५८ ॥

कनकमयीं जनकसुतामाचार्यानुज्ञयोररीकृत्य ।
रामोऽश्वमेधमकरोत् हयमेधो नैकभार्यकार्यो हि ॥ १५९ ॥

यागसदः शिष्याभ्यामागत्याराधितश्च रामेण ।
वाल्मीकिरास्त मध्येऽमूल्यो मणिरेव निष्कमध्ये स्यात् ॥ १६० ॥

गुर्वाज्ञया कुशलवौ चरितं रामस्य मुनिकुले जगतुः ।
मुनिशिष्यतयोत्तरदौ अनिलेरित एव वर्षति घनौघः ॥ १६१ ॥

रामोऽप्यनुजैः साकं सामोदं स्वसविधे निजोदन्तम् ।
विशिष्य गीतमशृणोत् तृषितस्यैव हि सुधा स्वदेतालम् ॥ १६२ ॥

सम्मानोपेक्षितया रामो गुणलक्षणैश्च तौ मनसि ।
स्वौ निश्चिकाय तनुजौ स्वाननमादर्शगं न को वेत्ति ॥ १६३ ॥

गहनात्सीतानयने सहसानुमतिं ददौ तदा रामः ।
सुचिरोत्कण्ठितचेताः उचिता भर्तुः सतीषु सादरता ॥ १६४ ॥

आनाय्य तां स्वशिष्यैर्जनकसुतां स्वाश्रमात्स वाल्मीकिः ।
अनयच्च रामसविधं निक्षेपः स्वाम्यपेक्षितो देयः ॥ १६५ ॥

दर्शयतु सदसि शुद्धिं पुनरपि सीतेति रघुकुलाधीशः ।
आज्ञापयत्सतीं ताम् अपवादविशुद्धिमीहते मानी ॥ १६६ ॥

रामे च सदसि पश्यति भूर्दीर्णा भद्रपीठमारोप्य ।
सीतामनयत्स्वान्तः पुत्र्यतिदुःखं हि न सहते माता ॥ १६७ ॥

अथ हयमेधावभृतं विधिमनतिक्रम्य रामभद्रोऽसौ ।
विदधे नैमिशविपिने वितनोति मखक्षतिं हि नाशौचम् ॥ १६८ ॥

सीतावियोगदुःखं प्राप्तं सस्मार नैव रघुवीरः ।
जैत्रसुतसन्निधानात् पुत्रमुखेक्षा हि हन्ति दुःखशतम् ॥ १६९ ॥

स समर्धिकमनुजेभ्यो धर्मात्मा संप्रदाय तत्साह्यात् ।
प्रशशास महीं रामः सुसहायो भूपतिर्हि विजयी स्यात् ॥ १७० ॥

कौसल्या च सुमित्रा कैकेय्यपि दिवमुपेत्य पतिसहिताः ।
रामेणातर्प्यन्त च क्षेमः पुत्रस्य मातृभाग्यं हि ॥ १७१ ॥

गान्धारजयोद्यमिनं गार्ग्याचार्येण कारयामास ।
रामं जातु युधाजित् कामयते लोक आत्मजनकुशलम् ॥ १७२ ॥

तरसाभिषिच्य रामो भरतस्य सुतौ युधाजिदुपदिष्टः ।
प्रास्थापयत् सभरतौ न स्थैर्यं बालशौर्यं ईक्ष्येत ॥ १७३ ॥

बलिनस्ते गन्धर्वान् शैलूषसुतान् त्रिकोटिसंख्याकान् ।
हत्वापुर्गान्धारान् सत्त्ववतां जिष्णुता दिशेद्देशान् ॥ १७४ ॥

तक्षं तक्षशिलायां पुष्कलमास्थाप्य पुष्कलावत्याम् ।
भरतो भेजे रामं ह्यग्रजकैङ्कर्यमेव तद्राज्यम् ॥ १७५ ॥

कारुपथनामदेशे भरतेन ज्ञापितेऽन्वशाद्रामः ।
लक्ष्मणसुतौ निवस्तुं रक्ष्यं हि कुटुम्बमर्थमुत्पाद्य ॥ १७६ ॥

अङ्गदमथाङ्गदीयं सौमित्रिश्चन्द्रकेतुमप्यनयत् ।
श्रीचन्द्रकान्तनगरं वाञ्छति हि पिता सदा सुतश्रेयः ॥ १७७ ॥

अथ मुनिवेषः कालोऽकथयद्रामं मिथो विधिप्रहितः ।
वैकुण्ठागमनकृते ह्याकारणमुचितमखिलनाथस्य ॥ १७८ ॥

दौवारिकतां नीतं दुर्वासा लक्ष्मणं तयोर्वदतोः ।
रामेक्षणं ययाचे ब्राह्मणता नाम सततमनियोगा ॥ १७९ ॥

लपितं सौमित्रिमुखात् कुपितस्य स राघवोऽत्रिपुत्रस्य ।
श्रुत्वा कालं व्यसृजत् जात्वपि न रहस्यमन्यवेद्यं स्यात् ॥ १८० ॥

हर्षान्मुनये रामो वर्षसहस्रोपवासिनेऽन्नमदात् ।
तृप्तोऽभवच्च स मुनिः विप्राणां भोजनं हि मोदाय ॥ १८१ ॥

अनवसरतत्प्रवेशादनुजमसौ निश्चितात्ममात्रवधम् ।
निरवासयद्गुरुगिरा नाग्रजकलितो निदेश उलङ्घ्यः ॥ १८२ ॥

सरयूजलान्मरुत्वान् स्वरगमयल्लक्ष्मणं तु सशरीरम् ।
यानेन जितेन्द्रजितं स्वानन्ददमर्चयत्यलं लोकः ॥ १८३ ॥

वैकुण्ठमारुरुक्षुः सोत्कण्ठान् प्राणिनः स्वमनुगन्तुम् ।
समनीनहत् स रामः सुमनाः समये न मुञ्चति स्वीयान् ॥ १८४ ॥

राममहाप्रस्थानं प्रेम्णा तत्प्रहितदूतवचनेन ।
शुश्राव स शत्रुघ्नः सौभ्रात्रं प्रीतिमेव वर्धयति ॥ १८५ ॥

मथुरां सुतं सुबाहुं वैदिशमपि शत्रुघातिनं नीत्वा ।
राममगाच्छत्रुघ्नः किं मान्यं ज्येष्ठशासनादन्यत् ॥ १८६ ॥

दक्षिणकोसलनाथं दक्षिणमकरोत् कुशं लवं तु पिता ।
उत्तरकोसलनाथं पुत्रप्राप्यं हि भवति पितृराज्यम् ॥ १८७ ॥

दत्वाङ्गदाय राज्यं सत्वरमागात्स राममनुगन्तुम् ।
सुग्रीवो दृढभक्तिः जागर्ति सुधीर्महाफलावाप्तौ ॥ १८८ ॥

किंकरवर्यं रामो लङ्काराज्ये न्ययोजयत्सुचिरम् ।
श्रीशार्चकं विभीषणम् आशामात्मार्पितां विभिन्द्यात्कः ॥ १८९ ॥

चिरजीवी हनुमंस्त्वं चरितं मम यावदस्ति भुवि तावत् ।
निवसेत्यवदद्रामो न विभाति रसो हि रसिकजनविरहे ॥ १९० ॥

गदति स्म जाम्बवन्तं मैन्दद्विविदौ च मत्कथासुधया ।
जीवत चिरमिति रामो भिक्षालाभे किमस्ति गानेन ॥ १९१ ॥

हनुमज्जाम्बवदङ्गदमैन्दद्विविदान् विभीषणं रामः ।
चिरजीवितयात्याक्षीत् करुणा यदि भगवतः क वा न सुखम् ॥

स्वानुगतयेऽनुमेने वानरसेनाश्च राक्षसानृक्षान् ।
सर्वाञ्जनांश्च रामः सर्वानुग्राहको हि समदर्शी ॥ १९३ ॥

रविजधृतवाजपेयप्रवरच्छत्रः पुरस्कृताग्निमुनिः ।
रामोऽगादनुजाभ्यां धर्मोऽयं सर्वयायजूकानाम् ॥ १९४ ॥

अनुयायिभिः सरय्वां मनुकुलनाथश्चराचरैरस्नात् ।
सर्वे देवा आसन् दुर्वारो रामसङ्गिजलमाहिमा ॥ १९५ ॥

ते वानरास्तु सर्वे देवांस्तेजोमयाः स्वजनिहेतून् ।
रामानुमता अविशन् धाम स्वं पूर्ववासना गमयेत् ॥ १९६ ॥

सान्तानिकाख्यलोके सन्ततमवसन् सुखेन विधिविहिते ।
रामाज्ञयैव सर्वेऽप्याखोर्विवरं पृथक्तया स्थेयम् ॥ १९७ ॥

रामः सशङ्खचक्रो धाम स्वमगाच्चतुर्भुजः श्रीमान् ।
ब्रह्मनुतो जितशत्रुः सिंहः करिणं विदार्य विशति गुहाम् ॥ १९८ ॥

प्रतियुगमवनाय सतां कतिपयशठशिक्षणाय च श्रीशः ।
अवतरति रघोर्वंशे निवसति नैकत्र रक्षको नृणाम् ॥ १९९ ॥

॥ इति उत्तरकाण्डः ॥

इति कडयक्कुडि ब्रह्मश्री

सुब्रह्मण्यसूरिकृतं श्रीमदासेचनकरामायणं

संपूर्णम्

॥ ओं तत्सत् ॥



## Works of Brahmasri Subrahmanya Suri of Kadayakkudi

*published by his Son*

S. SANKARANARAYANAN Supdt. Accountant General's Office, Madras.

# (1) VALLI BAHULEYAM

(Approved by the Text-Book Committee Madras.)

**Extracts of Opinions** **Price As. 12./—**

Mahamahopadhyaya Vidyavacaspati Prof. S. Kuppuswami Sastriar, M. A., I. E. I had an opportunity to peruse the Sanskrit drama—*Vallibahuleya*—; and I am glad to be able to say that its author, the late Brahmasri Subrahmanya-suri of Kadayakkudi, a descendant of Cokkanatha Diksita, has shown in this drama a commendably high level of poetic and artistic skill. His Sanskrit style is good and he has successfully harmonised his diction with the requirements of music, which forms an important element in this drama. He has taken care to make this play stageworthy and it contains many an attractive element of appeal from an operatic point of view. Sanskrit compositions of this kind are rarely produced in the present century and deserve encouragement.

The "Vaitarani" of orissa—a Research Journal. "An excellent Sanskrit drama of recent years. There is a charm in the style, the melody and the sweetness of the slokas can be fully felt when they are sung. The prakrit slokas with their Sanskrit renderings as well as the Sanskrit ones are fine".

"The Adyar Theosophist". "This is a Sanskrit drama in seven acts. The plot is a well known story of the *Skandapuranam*. The hero is Skanda, the war lord known as Bahuleya. The heroine is Valli, the hunter girl afterwards his consort. The wedding of Valli and Bahuleya is the theme of the work. The style is very simple and the treatment of the story is mainly devotional and erotic, in the conventional modes of Expression with regard to human characterisation and nature description. The author being a Tamilian, has introduced in the first portion of the drama the popular Tamil Version of the play referring to Valli's Singing of Alolam, the scene of driving the preying birds off the cornfield by the hunter girl in her watch. The work is of recent production and has renderings of Tamil proverbs in Sanskrit in several places. The fascination of the author for the Tamil Version is due to the charming introduction in it of the two messengers of Bahuleya, in the guise of one fortune telling woman (Ikshanika) and another guhasevini, who can invoke on herself the very presence of Guha in order to prepare the minds of Valli's parents in favour of his being chosen as his bridegroom.

The dramatic Setting of the story is a praiseworthy attempt. The features of a good drama are fully represented in the work and they are pointed out by the author at the end. The Samskrita reading public will find the work deserving of every encouragement.

# (2) ASECANAKA RAMAYANAM

## (RAMAYANARYA)

**Price As. 8./—**

This is a short and sweet poem in Arya metre. The pecul feature of this work is that the first 3 padas of each sloka narrate the st and the 4th pada embodies the moral suggested by the incidents there The poem opens with Narada's interview with Valmiki and the auth has not omitted even a single event.

# (3) HALLISAMAṄJARI

## (கும்மி கோலாட்டபாட்டு etc.)

**Price As. 10./—**

This contains miscellaneous stotras in Sanskrit as detailed below the form of கும்மி கோலாட்டம் etc. Sweet and melodious to si This is being printed in Nagara characters with transliteration in Ta to facilitate readers not knowing Sanskrit.

(*a*) श्रीरामचन्द्रपद्यपञ्जरत्नं (*b*) शुकसूक्तिसुधारसायनं *or* कृष्णस्तुतिमाला (*c*) श्रीबृहदंबिकाविषयकहल्लीसविशेषाः (*d*) தங்கபாட்டு (*e*) पार्वतीपरिणयहल्लीसाः (*f*) रामायणहल्लीसाः (*g*) Miscellaneous डोलागीतं.

*Copies can be had of* :—

**S. Sankaranarayanan,**

*Superintendent, Accountant General's Office,*
*Madras.*

*1/7 New Street, Mylapore, Madras.*